

श्रीहयग्रीवाय नमः ।

# वेदान्ततत्त्वामृतम् ।

अद्वैतिनामद्वैतविद्यासम्प्रदायकर्तृत्वमस्ति वा न वेति विचार्यते-

(१) अथ गुरुर्महावाक्यजन्यब्रह्मापरोक्षज्ञानवान् देहात्मभ्रान्त्या सांसारिकक्लेशकदम्बमनुभवता स्वादृष्टवशतो विषयदोषदर्शनपूर्वकजातविषयविरागेण मुमुक्षुणा शिष्येणानुसृतः करुणास्वभावत्वेन तदुद्दिधीर्षया तस्मै महावाक्यमुपदिशतीति हि तावद्वेदान्तराद्धान्तः। अत्र 'अहं ब्रह्मास्मि, अयमात्मा ब्रह्म, ऐतदात्म्यमिदं सर्वं, सर्वं खल्विदं ब्रह्म, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्केन किं जिघ्रे'दित्यादिश्रुतितति जातस्वात्माभिन्नसर्वात्मज्ञानवान्, अत एव शिष्यं स्वाभिन्नत्वेन जानन् गुरुश्श्रोतृवक्तृश्रवणादिरूपसर्वजगन्निषेधेन शिष्याय कथं किं महावाक्यमुपदिश्यादिति विशिष्टाद्वैतिभिः कृतः पूर्वपक्षः ।

अयमुत्तरः—तादृशज्ञानेन स्वयमानन्दपूर्णोऽपि दुःखितदुःखापनोदनाय करुणावशाद्ब्रूयादिति । नन्विदमुन्मत्तप्रलपितं- प्रमात्राद्यात्मकसर्वजगन्निषिध्य केवलात्मस्वरूपतया स्थितस्य गुरोः कथं चक्षुषा शिष्यदुःखाभिवीक्षणम्? कथं वा वाचा तस्मै वचनम्? इदमेव हि श्रुतिः 'केन कं पश्ये'दित्यादिका जगौ । ननु गुरोर्नापरोक्षज्ञानं, किंतु

परोक्षमेव; अतः प्रमात्रादिजगन्निषेधो नेति चेत्तर्हि—स्वर्गादिप्रतिपादकवाक्यजन्यस्वर्गादिपरोक्षज्ञानेन यथाऽस्य पुरुषस्य न स्वर्गादिसौख्यं, तथा ब्रह्मपरोक्षज्ञानेनापि दुःखनिवृत्तिपूर्वकसुखप्राप्तिर्नास्तीति 'स्वयं तीर्णः परांस्तारये'दिति नयात् स्वत एवानिवृत्तदुःखस्य गुरोः शिष्यदुःखनिरासाय महावाक्योपदेशादिकं परिहासास्पदं स्यात् । अत एव हि- 'शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि । श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षत' इति भागवते व्यास उवाच ।

(२) अथ यदि- 'स्वाप्ययसम्पत्त्यो'रिति सूत्रे तासां श्रुतीनां सुषुप्तिमुक्त्यन्यतरविषयत्वस्य स्फुटीकृतत्वेन परमार्थदशायामेव जगन्निषेधः, न व्यवहारदशायामितिचेत्तर्हि परमार्थदशायामपि कथं वा प्रतीयमानस्य जगतो निषेधः ? नेत्रे निमील्य मां न कोऽपि पश्यतीति क्षीरपायी मार्जालो मन्वानोऽपि यथा नरैर्हन्यते, तद्वन्नेत्रे निमील्य ब्रह्मात्मानुसन्धानं कुर्वत्यपि पुरुषे कथं जगदपलप्यते ?

ननु जगतो निषेधो नाम प्रतीत्यभाव एव विवक्षितः, नतु मृतिः । तेन परमार्थदशायां तासां श्रुतीनामन्वयः सम्पद्यत एवेतिचेत्तर्हि तदानीं सर्वस्याप्रतीयमानत्वेन 'इदं सर्व'मिति कथं निर्दिष्टम् ? ननु व्यवहारदशायां प्रतीयमानमिदं सर्वं परमार्थदशायामैतदात्म्यमित्यर्थात् श्रुतीनामपि व्यावहारिकत्वान्नानुपपत्तिरितिचेत्तर्हि पारमार्थिकस्य स्वात्मन एव सर्वात्मकत्वेन व्यवहारदशायामपि स्वस्यैव सर्वत्र शिष्यादिशरीरे आत्मत्वेन वर्तमानत्वात्, आत्मन्यविद्याकृतसंसारस्य विद्यानिवर्त्यत्वात्, गुरोः स्वविद्यया स्वात्मसंसारो यदा निवृत्तस्तदा

शिष्याणामपि निवृत्तः स्यादेवेति किमर्थं शिष्योपदेशप्रयासो गुरोः । नैवमेकमुक्तौ सर्वमुक्तिप्रसङ्गः शङ्क्यः- अविद्यावरणशक्तीनां नानात्वात् । एकोऽप्यात्मा यत्र शरीरे यया आवरणशक्त्या विक्षिप्तस्तत्र शरीरे विद्यया तच्छक्तिविनाशे सत्येव विक्षेपाभावात् ।

(३) ननु इदमतीव चित्रं- यदेकस्यैवापरिच्छिन्नस्यात्मनस्तत्तच्छरीरादिभिः परिच्छेदः, एकस्मिन्नंशे मुक्तिः, अपरस्मिन् संसार इतिचेत्, नायं दोषः—शरीरादीनां बन्धमुक्त्योश्च मिथ्यात्वात् । ननु मिथ्यामुक्त्यर्थं कुतोऽयं प्रयास इतिचेत्, नैष दोषः—प्रयासस्यापि मिथ्यात्वात् । ननु पारमार्थिकदशायां- 'मत्तस्सर्वमहं सर्वं मयि सर्वं सनातनं' इति ज्ञानमस्ति वा उत व्यावहारिकदशायाम् ?

नाद्यायाम्— तदानीं चैतन्यातिरिक्तस्य यस्य कस्याप्यभावेन अन्तःकरणवृत्तिरूप'मत्तस्सर्व'मित्यादिज्ञानस्याप्यभावात् । यदि द्वितीयायां तर्हि शिष्यादेस्सर्वस्य स्वस्वरूपत्वेन स्वाभिन्नत्वज्ञानान्न शिष्यं प्रति गुरोरुपदेशः सङ्घटीतेतिचेत्, न—व्यवहारदशायामेव मननादौ तद्ज्ञानमस्ति, न तु वचनादौ । नन्वहो शिष्यंप्रत्युपदेशवेलायामस्ति वा उत न ? यद्यस्ति तर्हि उपदेशानुपपत्तिः, यदि नास्ति तर्हि तदानीं तस्य गुरोरज्ञत्वेन उपदेशानुपपत्तिरितिचेत्, न—परोपदेशवेलायां ब्रह्म परोक्षमेव । ननु ब्रह्मणः स्वात्मत्वेनात्मनश्च प्रत्यक्त्वेन कथं स्वात्मा स्वस्य परोक्षं स्यादितिचेत्, न—आत्मनः परोक्षत्वं नाम स्वस्वरूपसाक्षात्काराभावः । ततश्च व्यवहारदशायां आत्मसाक्षात्काराभावात् शिष्यादिभेदबुध्या उपदेशोपपत्तिरिति । नन्वात्मसाक्षा-

त्काराभावे कस्य वोपदेशः शिष्याय गुरुः कुर्यात्तदेचेत् , न—'आत्मा निष्कलो निष्क्रिय' इत्यादिज्ञानमस्त्येव, किंतु अयमात्मा ब्रह्मेति ज्ञानं नास्ति । ननु तादृशज्ञानाभावे महावाक्यस्य अयमात्मा ब्रह्मेत्यस्य कथमुपदेशस्तर्हि परमार्थदशायां कृतात्मतत्त्वसाक्षात्कारस्य गुरोरुपदेशवेलायां तत्साक्षात्काराभावेऽपि तदुपदेष्टुं वाचः को वा निर्बन्धस्स्यात् । नन्वात्मतत्त्वसाक्षात्कारनिवृत्ताज्ञानस्य गुरोरात्मनि निर्विशेषचिन्मात्रस्वरूपे शिष्याद्यध्यासस्य कारणभूतं यदज्ञानं तस्य निवृत्तत्वादेव आत्मस्वरूपाध्यस्तं शिष्यादिकं प्रति कथमुपदेशः ? अध्यासकारणाज्ञानाभावेनाध्यासस्य नष्टत्वात्, अध्यस्तस्याप्यप्रतीत्यौचित्यादितिचेत् तथापि ज्ञानेन निवर्त्यमानमप्यज्ञानं यावद्देहपातमविनश्य, ज्ञानोदयदशायां स्वव्यापारं विक्षेपादिकं सङ्कोचयित्वा स्वयमपि नष्टवदतिसंकुचितत्वेन स्थित्वा प्रारब्धवशात् पुनःपुनरपि ज्ञानमपि सङ्कोचयित्वा स्वकार्यं विक्षेपादिकमुत्पादयति । अतो विक्षेपसद्भावे शिष्यप्रतीतिर्गुरोर्जायते, तदभावदशायां केवलात्मतया गुरुस्तिष्ठतीत्यकिञ्चित्करोऽयं दोष इति विद्धि ।

(४) ननु विक्षेपसद्भावे गुरोरुपदेशदशायां स्वधिय एव सांसारिकक्लेशैर्विक्षिप्तत्वेन स्वस्यैवात्मतत्त्वज्ञानस्मृतिर्नास्तीति कथं शिष्यं प्रत्युपदेश इतिचेत्, न—उपदेशदशायां गुरोर्विद्यमानो विक्षेपः वक्तृत्वश्रोतृत्ववचनादिरूपभेदबुद्धिरेव, नतु पुनरहं स्थूल इत्यादिदेहात्मभ्रान्तिरूपः; तेन सांसारिकक्लेशो न गुरोरिति ।

ननु गुरोस्त्वदुक्तरीत्या उपदेशकाले यदि भेदज्ञानं तर्हि कथमभेदज्ञानं तस्य सम्भवेदुपदेष्टुम् ? यदि पुनरभेदज्ञानं तर्हि कथं

शिष्यादिभेदज्ञानं यदाधारेणोपदेशोपपत्तिर्भवेदिति चेन्न- अविद्यायाः सर्वात्मनाऽनिवृत्तत्वात् गुरोः पारमार्थिकमभेदज्ञानं यद्यप्यस्ति, तथापि व्यावहारिकभेदप्रतीतिरस्ति । तत्रापि भेदप्रतीतावियं भेदप्रतीतिर्मिथ्येति ज्ञानमस्ति । तेन ज्ञानिनोऽज्ञानिनोऽपि व्यवहारदशायां भेदप्रतीतौ समायामपि प्रतीयमानभेदविषयकासत्यत्वसत्यत्वज्ञानाभ्यां भेदः । अत उपदेशकालेऽपि गुरोर्भेदज्ञानस्याऽभेदज्ञानस्य च सत्त्वाच्छिष्यादिभेदज्ञानपूर्वकाभेदज्ञानोपदेशो युज्यत एवेति । ननु भेदाभेदज्ञानयोरुभयोर्विरोधित्वात्कथमेकत्र गुरावेकस्यामाचार्यत्वदशायामुभयोस्सत्त्वमविरोधेनेति चेत्, न तथा- भेदाभेदज्ञानयोरुभयोरपि मिथ्यात्वे वा सत्यत्वे वा समाने सति भवदुक्तरीत्या विरोध एव; किं त्वेकं मिथ्या; अपरं सत्यम् । अतो मिथ्याभेदज्ञानेन मिथ्याभूताभेदज्ञानस्य बाधः; न तु सत्यभूताभेदज्ञानस्य । मिथ्याभूताभेदज्ञानं तु नास्त्येवेति न परस्परं तयोर्विरोध इति ।

ननु भेदज्ञानवदभेदज्ञानमपि खल्वन्तःकरणवृत्तिः । तस्य च मुक्त्यादावभावेन बाध्यत्वलक्षणमिथ्यात्वं दुर्निवारम् । अत एव तादृशेनापि बोधेन संसारो हि निवर्तत इति पञ्चदश्यां विद्यारण्यस्वामिभिः अभेदज्ञानस्यापि मिथ्यात्वमुररीकृतम् । अतस्सत्याभेदज्ञानस्यैवाभाव इतिचेत्, न—ज्ञानस्य वृत्तिरूपस्य मिथ्यात्वेऽपि तद्विषयाभेदपदार्थस्य ब्रह्मणस्सत्यत्वात्; सत्यासत्ययोरभेदभेदयोर्विभिन्नत्वेन असत्यभेदेन सत्याभेदस्य बाधाभावान्न तद्विषययोर्ज्ञानयोरपीति । ननु अभेदज्ञानेनापि भेदज्ञानस्यानिवृत्तौ संसारहेतुभूतमिदं भेदज्ञानं स्वेनैव निवर्त्यते, उतान्येनाज्ञानेन ? नाद्यः- स्वस्य स्वनिवर्तकत्वाऽ-

योगात् । न द्वितीयः- अज्ञानकार्यस्य भेदज्ञानस्य स्वकारणेनाज्ञेनेनानिवर्तनीयत्वात् । किं च सर्वथाऽप्यनिवर्तनीयत्वेऽबाध्यत्वलक्षण-सत्यत्वमपि भेदज्ञानस्य भवेत्; तेन युष्माकमपसिद्धान्तापात इतिचेत्, न— असत्यभेदेन सत्याभेदस्याबाध इत्यस्माभिरुक्तं; नतु सत्याभेदेनासत्यभेदस्य बाधाभाव इति । अतो भेदज्ञानेनाभेदज्ञानस्याबाध्यत्वेऽप्यभेदज्ञानेन भेदज्ञानस्य बाध्यत्वं स्यादेवेति ।

ननु तर्ह्यभेदज्ञानेन भेदज्ञानस्य बाधितत्वेन कथं शिष्यादि-भेदज्ञानं गुरोरभेदज्ञानिन इतिचेत्, मैवम्—अभेदेन भेदस्य बाधात्तज्ज्ञानेनैतद्ज्ञानस्य बाध इत्यस्माभिरुक्तम् । परं तु न तयोर्ज्ञानयोः परस्परं बाधः, किं तु उपजीव्योपजीवकभावरूपसौहार्दमेव । तथाहि-अयं प्रतीयमानो गुरुशिष्यादिरूपो भेदोपि मिथ्येति ज्ञानं भेदज्ञानम् । इदमनुभूयमानमात्मतत्त्वमभिन्नं सत्यं ब्रह्मैवेति ज्ञानमभेदज्ञानम् । प्रतीयमानस्य गुरुशिष्यादिभेदस्य मिथ्यात्वनिश्चये सत्येवात्मतत्त्वस्य ब्रह्मणोऽद्वितीयज्ञानमुपपद्यते, न त्वन्यथा । अतो नानुपपत्तिरिति ।

ननु त्वदुक्तं ज्ञानं न भेदज्ञानं; किं तु भेदज्ञानविषयक-मिथ्यात्वज्ञानम् । तथाहि प्रतीयमानो भेदो नाम ज्ञायमानो भेद इति ह्यर्थः । ततश्च भेदप्रतीतिर्मिथ्येति फलितं; तेन भेदज्ञानं मिथ्येति ज्ञाने भेदज्ञानस्य विषयत्वेन मिथ्याज्ञानविषयस्य भेदज्ञानस्य मिथ्यात्वज्ञाने कथं ज्ञानत्वम्? एवमेव त्वदुक्ताभेदज्ञानमपि नाभेद-ज्ञानं; किं तु तद्विषयकसत्यत्वज्ञानमेव । अतो भेदाभेदज्ञानविषयक-सत्यत्वासत्यत्वज्ञानयोस्त्वदुक्तरीत्योपजीव्योपजीवभावसत्त्वेनाविरोधेऽप्ययं

गुरुरयं शिष्य इत्याकारकभेदज्ञानं 'सर्वं खल्विदं ब्रह्मैवैतदात्म्यमिदं सर्व'मित्यभेदज्ञानेन बाध्यत एवेति भेदाभेदज्ञानयोर्विरोध एवेति चेन्न- 'सर्वं खल्विदं ब्र'ह्मेत्यनेनैतद्गुरुशिष्यादिकं सर्वं जगद्ब्रह्मैवेत्यर्थस्य लब्धत्वेन एतदभेदज्ञाने गुरुशिष्यादिभेदज्ञानस्याप्यन्तःपातित्वान्न तयोर्विरोधः ।

ननु अभेदज्ञाने गुरुशिष्यादिद्वैतस्यैवान्तःपातित्वं, न तद्ज्ञानस्य । तथाहि- इदं प्रतीयमानं सर्वं शिष्यादिरूपं द्वैतं ब्रह्मैवेतीदमेव ह्यभेदज्ञानम् । अत्र ज्ञेयं शिष्यादिद्वैतं कथं ज्ञानं भवितुमर्हतीतिचेत् ,न—'अयं घट अयं पट' इत्याकारेण प्रतीयमानं सर्वं जगदिति इदंशब्दार्थनिर्वचनेनाभेदज्ञाने अयं घटोऽयं पट इति द्वैतज्ञानस्यापि अन्तःपातित्वात् ।

ननु अभेदज्ञानविषयेदम्पदस्य परिदृश्यमानार्थबोधकत्वेनैवात्र सार्थक्यं, नतु त्वदुक्तस्य- आकांक्षाराहित्यात् । तथाहि- परिदृश्यमानस्य द्वैतस्य ब्रह्मात्मकत्वं बोधयितुं श्रुतिः प्रवृत्ता, नतु द्वैतं बोधयितुम् । यदि द्वैतमेव बोधयितुं प्रवर्तेत तर्हि अयं घट अयं पट इति भेदेन प्रतीयमानं सर्वमपि द्वैतं स्यादित्यर्थमवलम्ब्य सर्वमिदं द्वैतमित्येव वर्तेत । अतोऽत्र न द्वैतज्ञानाकांक्षेतिचेत्तर्हि सर्वमित्यस्य ज्ञातृत्वज्ञानज्ञेयात्मकं निखिलजगदित्यर्थाद्भेदज्ञानस्यापि सर्वपदाभिधेयत्वादिदं भेदज्ञानं ब्रह्मैवेत्यभेदज्ञानान्तःपातित्वमस्त्येव भेदज्ञानस्येति विद्धि ।

ननु भवत्वेवमप्यस्मिन्नभेदज्ञाने भेदज्ञानब्रह्मात्मकत्वस्य विषयत्वाद्भेदज्ञानब्रह्मणोरेकत्वेन मास्तु विरोधः । एतावता कथं पुनर्भेदा-

भेदज्ञानयोरविरोधः किं वक्तुं शक्यते चेत्तर्हि- उभयोरपि ज्ञानयोर्ब्रह्मात्मकत्वादविरोधः । ननु तर्हि बाह्यवैरिभयोरुभयोरपि ब्रह्मात्मकत्वादविरोधस्स्यात् ; यदि तथा । ननु मास्त्वविरोधः कथं वा तयोर्विरोधः ? इदं कुड्यमिति भेदज्ञाने इदं कुड्यं ब्रह्मेत्यभेदज्ञाने च कुड्यानुसन्धानाविशेषादिति चेत् , न- कुड्यब्रह्मात्मकत्वानुसन्धानमेकत्र कुड्यानुसन्धानमपरत्रेति भेदात् ।

ननु भेदज्ञानादभेदज्ञानस्य विशिष्य स्थितत्वेऽप्यभेदज्ञानाद्विशिष्य न स्थितं भेदज्ञानम् । उभयत्रापि कुड्यानुसन्धानं, एकत्रैव ब्रह्मानुसन्धानमिति निर्णीतत्वादिति चेत् , न- इदं परिदृश्यमानं वस्तु कुड्यमिति भेदज्ञाने, इदं परिदृश्यमानं वस्तु ब्रह्मेत्यभेदज्ञाने चेदंतांशेऽविरोधेऽपि कुड्यब्रह्मणोर्जडज्ञानरूपत्वेन तदंशे विरोध इति । ननु सर्वत्रापि कुड्यादौ ब्रह्मसत्तादेरनुस्यूतत्वादेव कुड्यं सद्भातीत्यादिप्रतीतेर्ब्रह्मणः कुड्यादिकं प्रति कथं विरोध इति चेत् , मास्तु-- कुड्यादेर्ब्रह्म प्रति विरोधः केन वार्यते- कुड्यादिसद्भावे ब्रह्मसाक्षात्काराभावात् । अन्यथा समाध्यादाविव गृहनिर्माणादिव्यवहारकालेऽपि ब्रह्मसाक्षात्कारो भवेत् । मनसस्सर्वविषयवृत्त्यभावे हि ब्रह्मात्मसाक्षात्कारः, नतु पुनः कुड्यादिदर्शनसद्भाव इति ।

ननु कुड्यादेर्ब्रह्मविरोधत्वे समाधिकालेऽपि कथं कुड्याद्यभाव इति चेत् , न- द्वैताभावो नाम द्वैतज्ञानाभाव एव । अत एव द्वैतज्ञानसद्भावे न ब्रह्मसाक्षात्कारः- ब्रह्मत्वस्यैव सर्वत्रापि द्वैते तद्ज्ञाने च ब्रह्मसत्तादेरनुस्यूतत्वात् । द्वैतसद्भावस्तु न ब्रह्मसाक्षात्कारविरोधी;

तत्कथं द्वैतज्ञानसद्भावे उपदेशकाले गुरोर्ब्रह्मज्ञानमिति मया भवान् पृष्टः ।

ननु द्वैतानुसन्धानाभावेऽद्वैतानुसन्धानमेव नास्ति । तथाहि-- सर्वं खल्विदं ब्रह्मेत्यत्रेदं सर्वमिति द्वैतमनुसन्धाय पश्चात्तस्य ब्रह्म खल्विति ब्रह्मात्मकत्वमनुसन्धीयते । अद्वैतं नाम ब्रह्मैव खलु । ततोऽभेदज्ञानस्य भेदज्ञानपूर्वकत्वान्न तयोर्विरोध इति चेत्तथासति- समाध्यादौ जायमानस्य ब्रह्मसाक्षात्कारस्य द्वैतज्ञानपूर्वकत्वाभावान्नाभेदज्ञानत्वम् । सति द्वैतज्ञाने निर्विकल्पकसमाधेरेवानुदयान्नैवम्— यदभेदज्ञानं द्विविधं- सर्वं खल्विदं ब्रह्मेत्येकं, ब्रह्मसाक्षात्काररूपमपरम् । सर्वस्य ब्रह्मात्मकत्वानुसन्धानेन, केवलब्रह्मानुसन्धानेन चोभयोर्भेदः । तद्ब्रह्मसाक्षात्कारविरोधित्वेऽपि द्वैतज्ञानस्य न सर्वब्रह्मात्मकत्वानुसन्धानविरोधित्वमिति ।

ननु उपदेशकाले सर्वब्रह्मात्मकत्वानुसन्धानं यद्यस्ति तर्हि तस्मादेवाभेदज्ञानान्न गुरोश्शिष्यादिकमुद्दिश्य शिष्यत्वादिभेदज्ञानं, यदवलम्ब्य तस्मा उपदिशेदिति चेन्न—देवादिसर्वशरीराणां पञ्चभूतात्मकत्वेऽपि अयं देवोऽयं मनुष्य इत्यादिभेदप्रतीतिर्यथा तेष्वस्ति तथैव ब्रह्मात्मकत्वेऽपि जगतोऽयं गुरुरयं शिष्य इत्यादिभेदप्रतीतिरस्त्येवेति । किंच सर्वस्याऽपि कार्यमात्रस्य स्वकारणात्मकत्वावश्यम्भावेन घटशरावादिनां मृदात्मकत्वाविशेषेऽपि कम्बुग्रीवत्वादिविशेषसद्भावेन अयं घट इदं शरावमित्यादिभेदज्ञानमस्ति यथा तथैवात्रापीति ।

ननु भवतु ब्रह्मानुसन्धानं, तस्य यद्यस्ति उपदेशकाले तर्हि

समाधाविव न द्वैतज्ञानं, यदि नास्ति तर्हि कथं स्वेनैवाज्ञातं तद्ब्रह्म गुरुः शिष्यायोपदिशेदिति चेन्न, शृणु— ब्रह्मसाक्षात्कारोऽपि द्विविधः- ज्ञातृज्ञानज्ञेयरूपं सर्वमपि परित्यज्य केवलब्रह्मात्मकतयाऽवस्थानमेकः, सत्यं ज्ञानमनन्तं ब्रह्मेतिशास्त्रगुरूपदेशादिजनितब्रह्मविज्ञानमपरः । सत्यादिस्वरूपं ब्रह्मेतिजायमानान्तःकरणवृत्तिरूपज्ञानमपर इति भावः । अत एव 'ब्रह्मविद्ब्रह्मैव भवती'ति श्रुत्या ब्रह्मविदः पुरुषस्य पश्चाद्ब्रह्मभवनमुक्तम् । ननु कथं तत्र ब्रह्मभवने साक्षात्कारपदप्रयोग इति चेत्, औपचारिक इति विद्धि ।

ननु समाध्यादौ ब्रह्मविदो ब्रह्मत्वाङ्गीकारे तस्य कथं पुनस्संसारावृत्तिः- 'तद्भूत्वा न पुनरावर्तन्ते' इतिश्रुतेरितिचेद्देहपातानन्तरं तद्भूत्वेति तदर्थः । देहसद्भावे गमनागमनादिकं सम्भवत्येव, अन्यथा दिनेदिने सुषुप्तौ ब्रह्मसायुज्ये सत्यपि पुरुषस्य पुनः कथं जागरितम् । ननु सुषुप्तावक्लेशेनैव ब्रह्मप्राप्तौ किमर्थोऽयं तत्प्राप्तिप्रयास इतिचेत्तत्र पुरुषस्य ब्रह्मभवनमविद्यावृतमन्यथा तदा समाधाविव कुतो न ज्ञायते । अतस्तन्निरसनार्थमुपदेशादिकमिति ।

ननु समाधौ मुक्ताविव अविद्यानिवृत्त्यादिके समे सति कथं पुनर्व्यवहार इतिचेत्, न—मुक्तौ अविद्या सर्वात्मना नश्यति, अत्र तु स्वकार्यावरणविक्षेपाद्यकरणेन संकुचिता केवला तिष्ठति; सुषुप्तौ तु आवरणकार्यमुत्पादयति । अतस्सुषुप्तौ सत्यामपि ब्रह्मप्राप्तौ न ज्ञायते । समाधौ ज्ञातृत्वमपि पुनरावर्तते- प्रारब्धवशादविद्यायाः पुनर्विकारोत्पत्तेः । मुक्तौ तु नावर्तते- अविद्याया अभावात् ।

नन्वहमेव कूटस्थः, गुरुशिष्यादिजगद्भ्रान्तेरधिष्ठानभूत इति वदतो वचः कथं न व्याहतम् • स्वस्मिन्कल्पितसर्वभ्रान्तीनां स्वयाथार्थ्यज्ञानेनैव निवर्तनीयस्वभावतया मयि कल्पितमिदं जगन्मद्ज्ञानेनैव निवर्त्येत इति ज्ञानवान्गुरुः कथं वोपदिशेदिति चेत्—पुरुषशब्दाभिधेयस्य साधिष्ठानचिदाभासस्य तद्वचनम् । ततः प्रवचनरूपविकारश्चिदाभासस्याहं कूटस्थ इत्याद्यभिधानं तु चिदाभासस्य स्वस्याधिष्ठानप्राधान्यविवक्षया न चैवमुपदेशानुपपत्तिरपि- चिदाभासानां नानात्वेन यस्य साधिष्ठानचिदाभासस्य तादृशज्ञानं जायते, तस्यैव मुक्तिर्नेतरस्येति- ज्ञानसद्भावाद्गुरोः ।

ननु आत्मनि सकलस्य जगतः कल्पितत्वेन चिदाभासानामपि कल्पितत्वमेव खलु; तत्र कल्पनाहेतुरविद्या । सा च विद्यया निवर्त्यते । अतो विद्ययाऽविद्यानिवृत्तौ तत्कार्यचिदाभासानामपि निवृत्तिर्भवेत्; तदाऽऽत्मन एकत्वेन तदविद्यायाः कस्यचिद्गुर्वादेर्विद्यया निवृत्तत्वात् कथं पुनरिदं चिदाभासं जगत्प्रतीयत इति चेत्, न—अविद्याया एकत्वेऽपि तच्छक्तीनां नानात्वात् । यस्य पुरुषस्य विद्यया स्वावरणादिहेतुशक्तिनिवृत्तिः तस्यैव मुक्तिर्नेतरस्येति ।

ननु शक्तेर्निवृत्तत्वेऽप्यविद्यायास्सत्त्वाङ्गीकारान्मुक्तस्य पुनरपि संसारो भवेत्, यथा सुप्तस्येति चेत्तर्ह्यविद्यानामपि नानात्वमिष्यताम् । तथासति यस्य पुरुषस्य विद्यया स्वाविद्यानिवृत्तिः तस्यैव मुक्तिर्नेतरस्येति न दोष इति । ननु 'अजामेका'मिति श्रुतिविरोधस्तत्राविद्याया एकत्वाभिधानादिति चेत्- गौरश्व इत्यादिव्यक्तीनां नानात्वेऽपि जातेरेकत्वाच्छ्रुतावेकत्वोपदेश इति न दोषः ।

(९) ननु खण्डो मुण्डः पूर्णशृङ्गो गौरितिवद्व्यक्तिभेदप्रयोजकधर्माभावादविद्यायाः कथं नानात्वं, कथं वाऽनेकासां तासामेकस्यात्मनि स्थितिरिति चेत्- चिदाभासकल्पकत्वे समेऽपि तेषां विविधसंसारजनकत्वरूपव्यक्तिभेदप्रयोजकधर्मसद्भावान्नानात्वमविद्याया उपपन्नम् । अत एव ह्येकस्य कृष्यादिकमपरस्य वाणिज्यादिकमन्यस्य चौर्यादिकमिति बहुविधः संसारो जीवानामवगम्यते । तासां परस्परमविरोधादेकत्रावस्थानमपि नानुपपन्नम् ।

ननु स्वविद्यया स्वाविद्याविनाशे स्वात्मा शिष्यत इत्युक्तं, इतराविद्यानां तु न निवृत्तिः । अतो शेषितस्याप्यात्मन इतराविद्याप्रसक्तिरस्त्येवेति पुनरात्मनो विदुषो मुक्तस्यापि संसार आपतितः । विदुषा स्वाविद्याकृतस्वचिदाभासनिवृत्त्या शेषितस्य स्वात्मन एव स्वेतरचिदाभासहेत्वविद्याश्रयसर्वात्मत्वात् । इतराविद्यानामपि निवृत्त्यङ्गीकारे सर्वमुक्तिप्रसङ्ग इतिचेत्, नैवम्—आत्मनो नित्यमुक्तत्वात् ज्ञानात्पूर्वमपि न संसारः, किमुत पश्चात् ?

ननु यथात्मनो न मुक्तिस्तर्हि चिदाभासस्यापि नैव- चिदाभासनाशस्यैव मुक्तित्वात् । अतस्स्वनाशाय स्वयतनस्यानुपपन्नत्वाज्ज्ञातस्यापि तस्य नाशस्य पुरुषार्थत्वायोगान्मुक्तिप्रतिपादकशास्त्रगुर्वादीनामपार्थता इति चेत्, न—उभयात्मकस्य पुरुषस्य संसारमुक्त्योरुभयोरपि सत्त्वात् । तथाहि- साधिष्ठानचिदाभासस्य चिदाभासोऽहमिति यावद्धीः तावत्संसारः, यावत्पुनरहमधिष्ठानं कूटस्थचैतन्यमिति धीः तावदेव मुक्तिरिति ।

ननु उभयात्मकपुरुष एवासिद्धः । तथाहि- अधिष्ठानं चिदाभासश्चेत्येतद्द्वयं प्रत्येकं पुरुषशब्दार्थ इति वा ? युगपदेव पुरुषशब्दार्थ इति वा? एतदुभययुक्तमन्यद्वा ? अधिष्ठानयुक्तश्चिदाभासो वा ? नाद्यः- पुरुषस्संसारी पुरुषो निर्विकार इत्यादौ तथार्थप्रतीतावपि पुरुषस्संसारान्मुच्यत इत्यादौ, अधिष्ठानार्थकत्वे संसारप्राप्त्यभावेन मुक्त्यभावः; चिदाभासार्थकत्वे तस्य यावत्सत्त्वं तावत्संसारानपायान्मुक्त्यभावः । न द्वितीयः- अधिष्ठानचिदाभासयोरुभयोर्निर्विकारसविकारताभ्यां भेदात्पुरुषशब्दस्य निर्विकारादिविशेषणत्वे चिदाभासाप्रतीतिः, सविकारादिविशेषणत्वे अधिष्ठानाप्रतीतिरतोऽसम्भवः । न तृतीयः- अप्रसिद्धेः । न तुरीयः- अधिष्ठानरहितचिदाभासाभावादेव चिदाभास इत्यनेनैव साधिष्ठानचिदाभास इत्यर्थप्रतीत्या चिदाभासादन्यस्य साधिष्ठानचिदाभासस्यैवाभावादिति चेत्, न— चिदाभासस्याधिष्ठानसाहित्यानपायेऽपि चिदाभासत्वाधिष्ठानसहितत्वरूपधर्मद्वयसद्भावेन यदा केवलचिदाभासत्वं विवक्षितं तदा चिदाभास इति; यदा तूभयं विवक्षितं तदा उभयात्मकः पुरुष इति चोच्यते । अतः पुरुषस्य चिदाभासत्वमपवार्य अधिष्ठानतया स्थितिरेव मुक्तिः । तेषां पुरुषाणामनेकत्वान्नैकमुक्तौ सर्वमुक्तिप्रसङ्गः, नाप्युपदेशानुपपत्तिरिति ।

नन्वयं गुरुः किं पुरुषः, उतात्मा ? नाद्यः- स्वस्मिन्नविद्यया कल्पितस्वेतरजगत्प्रतीतिसद्भावेऽपि तस्य स्वचिदाभासस्याविद्यया कल्पितत्वानुसन्धानानुपपत्तेः । न ह्यहं मयि कल्पित इति प्रतीतिरुपपद्यते— अधिष्ठानचिदाभासयोरुभयोरप्यहंपदाभिधेयत्वात् । चिदाभासस्यापि सत्यत्वाङ्गीकारेऽपसिद्धान्तात् । न द्वितीयः- केवलस्याधिष्ठानस्य वृत्तिरूप-

ज्ञानाभावादिति चेन्न--पुरुषस्स्वस्याधिष्ठानत्वप्राधान्यविवक्षयाऽहं ब्रह्मेत्यादि-वाक्यजातं प्रयुञ्जानः स्वनिष्ठमन्तःकरणवैशिष्ट्यं मिथ्येति ज्ञात्वा फणति, नतु पुनश्चिदाभासो मिथ्येति- तथात्वे चिदाभासस्य स्वान्यत्वप्रतीतेः । चिदाभासो नामाऽन्तःकरणविशिष्टचैतन्यं, नतु प्रतिबिम्बितचैतन्यम् । अन्तःकरणादौ नीरूपे चैतन्यस्य नीरूपस्य कथं वा प्रतिबिम्बनम् ? अतश्चैतन्यमात्मा सत्यं, तस्यान्तःकरणवैशिष्ट्यं मिथ्येत्यात्मन्यध्य-स्तान्तःकरणवैशिष्ट्यमिथ्यात्वज्ञानं पुरुषस्योपपद्यत इति । किंच चिदा-भासो मिथ्येत्यादिवाक्येष्वपि सविशेषणस्य विशेष्यस्य बाधे सति विधिनिषेधौ विशेषणमुपसंक्रामत इति न्यायेनायमर्थ एव ग्राह्यः । यतः परमतेऽपि देहिनस्स्वस्मिन् नित्यत्वबुद्ध्या देहावयवमुखेनाहं नित्य इति वदतोऽपि ममैतद्देहवैशिष्ट्यमनित्यमिति प्रतीतिरुपपद्यते हि । लोकेऽपि नाहं शाश्वतः, किमेभिः, परलोकाय यत इति प्रतीत्या स्वस्मिन् देहविशिष्टे जीवे देहबुद्ध्याऽशाश्वतत्वं जीवबुद्ध्या परलोक-सिद्धिप्रयत्नबोधितशाश्वतत्वमप्युनुगम्यते हि । अतोऽहं नित्य इति, नाहं नित्य इति च पुरुषस्य प्रतीतिर्युज्यत इत्यविवादम् ।

नन्वात्मनोऽन्तःकरणराहित्यं केन ज्ञायते ? नात्मना वृत्त्यभा-वात्; न मनसा- रहितत्वात्; न विशिष्टचैतन्येन- विशिष्टस्य राहित्य-ज्ञानोदयासम्भवादिति चेत्, न—मनसैव- यतोऽन्तःकरणस्वरूपस्य न वैशिष्ट्यराहित्ये; किंतु तत्तादात्म्याध्यासस्यैव । मुक्तौ तु स्वरूपनाश एव । नन्वन्तःकरणेन सह तादात्म्याध्यासः कस्य भवति ? न ताव-च्चैतन्यस्य- तस्याध्यासाधिष्ठानत्वात्; नान्तःकरणस्य- स्वस्य स्वेन

तादात्म्यासम्भवात्; न विशिष्टस्य- तादात्म्याध्यासात्पूर्वं विशिष्टस्यै-वाभावादितिचेत्, प्रतिबिम्बचैतन्यस्यैवेत्यवेहि ।

(११) ननु प्रतिबिम्बपक्षः पुरैव त्वया निरस्तः खलु, तर्ह्यात्म-न्यादावविद्ययाऽन्तःकरणं कल्पितं; पश्चादात्मा तेन विशिष्टः, पश्चात्तेन सह तादात्म्याध्यासवान् भवतीत्यतो विशिष्टचैतन्यस्यैवेति विद्धि। ननु किमिदं वैशिष्ट्यम्? घटपटयोरिव किं संयोगात्मकं? न, उपहितत्वम्। नन्वेवमात्मनोऽन्तःकरणवैशिष्ट्ये कः केवलात्मेति चेत्, शृणु- अन्तः-करणवैशिष्ट्ये सति तादात्म्याभाववान् केवल इदमेवान्तःकरणोप-हितत्वमात्मनः ।

अयं भावः—अन्तःकरणं विद्यमानमेव यस्योपाधिभूतं स केवलः साक्षी, यस्य विशेषणभूतं स चिदाभासः । ननु भवतु त्वदुक्त-रीत्याप्यन्तःकरणं यस्य चैतन्यस्योपाधिस्तस्यैव पुनर्विशेषणमित्यन्तःकर-णोपहितस्यैव केवलस्यान्तःकरणतादात्म्याध्यासो भवतीति निष्पन्नमिद-मतिविरुद्धं, यत्केवलस्याध्यास इतिचेत्तर्हि तव प्रश्न एवानुपपन्नः । तथाहि- अध्यासो नामान्योन्यस्मिन्नन्योन्यधर्मारोपः, सोऽविद्यया भवति । आत्मधर्माणां सत्यज्ञानादीनां मनस्यारोपः, मनोधर्माणां सुखदुःखादीना-मात्मन्यारोपश्चाऽविद्यया कृतः । पुरुषोऽविद्यावशात्तदध्यासवानहं जीव इति, विद्यया तन्नाशादहं कूटस्थ इति च जानातीत्यतः कस्य भवती-तीदमनुपपन्नम् । किंच कस्य भवतीत्यस्याध्यासाश्रयः क इति वा भवता विवक्षितोऽर्थः? अध्यासवान् क इति वा, कमुद्दिश्येति वा? आद्ये- केवलस्यैवाधिष्ठानत्वेनाश्रयत्वमविरुद्धम् । द्वितीये- पुरुष एव ।

न तृतीयः- अविद्यायाः जडत्वेनोद्देशपूर्वकमध्यासं नोत्पादयति- अध्यासस्यापि जडत्वान्नोद्देशप्रसक्तिः । •

ननु अध्यासस्याधिष्ठानताऽऽत्मनोऽस्तु, हेतुत्वमविद्याया अस्तु, तद्वत्त्वं तदभाववत्त्वं च पुरुषस्यास्तु, किंत्वध्यासो नामारोप एव । सच न पेटिकायां पुस्तकानामिव आत्मन्यतद्धर्माणामारोपः, किंतु भ्रान्तिज्ञानात्मकः । ततोऽयं घट इत्यादिज्ञानं यथा कस्यचिज्जायते तथैवेदमप्यहं सुखीत्यादिभ्रान्तिज्ञानं कस्य जायत इति मत्प्रश्नः । अयं प्रश्ननिष्कर्षः- अनात्मन्यात्मभ्रान्तिरात्मन्यनात्मभ्रान्तिश्च किमात्मन उतानात्मनः ? अथ वोभयस्य ? नाद्यः वृत्त्यभावात् । न द्वितीयः- केवलस्य मनसो जडत्वात् । न तृतीयः- भ्रान्त्युदयात्पूर्वं विशिष्टस्यैवाभावादितिचेत्तर्हि प्रश्नस्योपपत्तिरस्तु ।

(१२)यदुक्तं त्वयान्तःकरणोपहितस्यात्मनोऽन्तःकरणवैशिष्ट्याध्यासो विरुद्ध इति- तत्सत्यमेव । अत एव अचिन्त्यरचनात्मकतया मायामयत्वेन इदमात्मनोऽन्यत्प्रकृतिपुरुषादिजगन्मिथ्येति सिद्धान्तितं शङ्कराचार्यैः । यद्वा चिदात्मना विशिष्टादन्तःकरणादेव भ्रान्तिज्ञानमुत्पद्यत इत्यङ्गीकार्यम् । केवलस्यान्तःकरणस्य जडत्वेऽपि चित्सहितस्य तस्याजडत्वात् , अन्यथा सङ्कल्पविकल्पादिज्ञानानि मनसो न जायेरन् ।

ननु चिदात्मोपाधिभूतस्य तस्यैव किं भ्रान्तिः ? उत चिदात्मविशेषणीभूतस्यान्यस्य ? नाद्यः- परमार्थदशायामपि भ्रान्त्युत्पत्तिप्रसङ्गात् , अन्तःकरणविशिष्टचिदाभासस्य मिथ्यात्वेन तदानीमभावात् , उपहितस्य साक्षिण एव सत्यत्वेन तदानीं सद्भावाच्च । नच विषया

भ्रान्तेर्निवर्तितत्वान्नोदेतुमर्हतीति वाच्यं, प्रमाज्ञानस्याप्युत्पत्तिप्रसङ्गात् । नहि प्रमाभूतमन्तःकरणवृत्तिज्ञानं पारमार्थिकम् । न द्वितीयः- अन्तः-करणस्यैकत्वेनान्यान्तःकरणाभावात ; अस्तीत्याग्रहे; व्यावहारिकगुर्वन्तः-करणस्य पारमार्थिकगुर्वन्तःकरणानुभूतात्मतत्त्वस्मृत्यसम्भवात् ; तस्या-प्यङ्गीकारे स्वस्यैवाबुधत्वेन शिष्यादिबोधनासम्भवादिति चेत, न तथा-- अन्तःकरणस्यैकस्यैव चिदात्मानं प्रत्युपाधित्वविशेषणत्वाभ्यां भेदः । तथाच- यदाऽन्तःकरणमात्मन उपाधिभूतं तदा न ज्ञानम् । यदा तु विशेषणीभूतं तदा ज्ञानानि जायन्त इति ।

ननु अन्तःकरणस्योपाधिभूतत्वे तद्विशेष्यचिदाभासस्य मिथ्या-त्वेनाभावेऽपि विशेषणीभूतत्वे तदुपहितस्य केवलात्मनोऽप्यभावप्रसङ्गः; ततस्तस्यापि मिथ्यात्वं स्याद्दृश्यत्वादिति चेत् , न—अन्तःकरणमेक-देवोपाधित्वविशेषणत्वधर्मद्वयभाग्भवति । तत्र तु यावद्देहपातं ज्ञानिन-श्चित्तस्योपाधित्वेन वर्तनं; यावद्व्यवहारं तु विशेषणत्वेन वर्तनमिति द्वयोर्भेद इति । नन्वेकस्यैकं प्रत्येकदा धर्मद्वयभाक्त्वं क्वापि न दृष्टं, न च सम्भवि; लोके च पितादेः पुत्रादीन् प्रति पितृत्वं, पौत्रादीन् प्रति पितामहत्वं चेत्येकस्यैकदा द्वौ प्रति धर्मद्वयवत्त्वं दृश्यते, सम्भा-व्यते च; ततोऽन्तःकरणस्य चैतन्यं प्रति एकदा उपाधित्वविशेषणत्व-धर्मद्वयभाक्त्वं विरुद्धमिति चेत , न—साधिष्ठानचैतन्यमन्तःकरण-मेकमेव यदा वृत्तिमत्तदा चैतन्यविशेषणमिति, यदा निर्वृत्ति तदा चैत-न्योपाधिरिति च प्रतिपादितत्वेन न दोष इति ।

ननु वृत्त्यवृत्त्योर्भेदेन यदा निर्वृत्त्यन्तःकरणं, तदा तद्विशिष्ट-

मिथ्याभूतचिदाभासाभावस्येष्टत्वेऽपि यदा सवृत्ति तदा सत्योपहितात्मनोऽप्यभावप्रसङ्गोऽनिष्ट आपतित इति चेत्, न—सर्वदाऽप्यन्तःकरणोपहितस्य वा तद्विशिष्टस्य वा चैतन्यस्य नाभावेन मिथ्यात्वं चैतन्यस्य सत्यत्वात् । किं तु चैतन्यनिष्ठस्योपहितत्वस्य वा विशिष्टत्वस्य वाऽभावादिकं, ततश्च पारमार्थिकोपहितत्वेन व्यावहारिकविशिष्टत्वस्य बाधः, तदप्युपहितत्वं मुक्तौ बाध्यते- अन्तःकरणस्यैव तदानीमभावादिति ।

ननु साधिष्ठानचैतन्यत्वे समानेप्यन्तःकरणस्य वृत्त्यवृत्तिमत्त्वभेदः कुत इति यदि, स्वनिष्ठगुणभेदादिति जनीहि । अन्तःकरणं यदा शुद्धसत्त्वमयं वा गुणत्रयरहितं वा तदा निर्वृत्ति; यदा तु सगुणं तदा सवृत्ति ।

नन्वन्तःकरणमेकमुतानेकम् ? नाद्यः- आत्मन इवान्तःकरणस्याप्येकत्वे पुरुषनानात्वहेतोरभावेन नानापुरुषाभावात्, परमार्थ इव व्यवहारेऽपि गुरुशिष्यभेदः गुरोः कदाऽप्युपदेशकाले न जायताम् । यथा स्वात्मविस्मरणविरोधादिदशायां जायते । यद्यनेकं तर्हि तस्य तदनेकत्वं किमुद्दिश्य ? न तावच्चैतन्यमुद्दिश्य- तस्याप्येकत्वेनान्तःकरणानेकत्वप्रतिपादकहेतोरस्मिन्नभावात् । अतो मनः प्रत्यात्मा नानेति वक्तुं न शक्यते । यदि प्रतिशरीरं नानेति शरीरमुद्दिश्य नानात्वं वदसि तर्हि शरीरपातानन्तरं तद्भेदाभावेन गुर्वन्तःकरणाभिन्नस्य शिष्यान्तःकरणस्य विनोपदेशं मुक्तिः । यदीन्द्रियाण्युद्दिश्येति तर्हि प्रतिशरीरं दशेन्द्रियाणां दश मनांसि वर्तेरन् । इष्टापत्तौ योऽहं घटमद्राक्षं सोऽहमिदानीं स्पृशामीत्यन्येन्द्रियमनोऽनुभूतस्यान्येन्द्रियमनस्स्मरणानुपपत्तेः ।

यदीन्द्रियदशकमुद्दिश्य प्रतिदशेन्द्रियसमुदायमेकं मन इति तर्हि सुषुप्तौ तद्भेद एव; यदीष्टापत्तिस्तर्हि जागरितमनसस्सुषुप्तमनोभिन्नत्वेन सुषुप्तस्य गुरुमनसो जागरणे यथाऽद्वैतज्ञानं तद्वत् । सुषुप्तशिष्यमनसोऽपि गुरुमनोऽभिन्नत्वेन जागरणे तस्यापि विनोपदेशमद्वैतस्मृतिर्जायेत । पाञ्चभौतिकत्वेनैकतत्त्वानामपि शरीराणां यथा रूपभेदाद्भेदः तद्वन्नाशङ्क्यो रूपभेदाद्भेदो मनसः- नीरूपत्वात् । यदि गुणभेदाद्भेद इति तर्हि निर्गुणस्य तस्याभेद एव- इष्टापत्तौ निर्गुणस्य गुरुशिष्यादिमनस एकस्य भिन्नसंस्काराश्रयत्वायोगात् । पुनरेकाकारवृत्त्युदयप्रसङ्गः, तस्याऽप्यङ्गीकारे वृत्तिवैचित्र्यादुभयविरोधः ।

नच स्वनिष्ठपुण्यापुण्यकर्मसंस्कारभेदाद्वृत्तिभेद इति वाच्यं, तत्कर्मसंस्काराः किमेकमनोनिष्ठा उतानेकमनोनिष्ठाः? नाद्यः- असम्भवात्, तत्संस्कारकार्यवृत्तिभेदानामपि एकमनोनिष्ठत्वमवश्याङ्गीकर्तव्यतया वृत्तिभेदानामपि हेतूनां मनोभेदाप्रयोजकत्वाच्च । न द्वितीयः— अनेकमनसामेवासिद्धेः । तथाहि- कर्मसंस्कारकार्यवृत्तिभेदसाध्यानेकवन्ति मनांसि, अनेकमनोनिष्ठकर्मसंस्कारकार्यो वृत्तिभेदश्चेत्यन्योन्याश्रयरूपो दोषः । नापि 'मनोऽनेकं वृत्तिभेदा'दित्यनुमानसाध्यं मनोनेकत्वमिति वाच्यं, एकस्यापि देवदत्तादेर्मनसः कालकर्मानुगुण्येन शांतघोरमूढादिनानाविधवृत्त्युदयस्य दृश्यमानत्वेन हेतोर्व्यभिचारात् । नच तद्वारणाय हेतोरैककालिकत्वविशेषणं देयमिति वाच्यं, 'मन एकं ऐककालिकनिर्वृत्तित्वा'दित्यनुमानेन तस्य बाधितत्वात् । नच पुनरेकदा सर्वेषां मनसां निर्वृत्तिकत्वं सम्भवतीति विशेषणासिद्धो हेतुरिति शङ्क्यम् । एतस्मिन्ननन्ते प्रपञ्चे एकदा समाधिमतामपि बहूनां मनसां लब्धव्यतया ऐककालिकनिर्वृती-

न्यपि मनांसि वर्तन्त इति तेषामभेद एव । अन्यथा ऐककालिक-नानावृत्तिमत्त्वमपि किं सर्वेषामस्ति ? ऐककालिकजागरितसुषुप्तमनसां मध्ये सुषुप्तानामभावत् ; नापि- मम मनो निर्वृत्ति, मम मनोनिर्वृत्ति समाधाविति समाध्युत्थितपुरुषवचनबलाद्भेदो मनसो वाच्यः, तादृशवचनस्याज्ञानकार्यत्वात् । अन्यथा ममेत्यस्यार्थभूतः को वा वक्ता ? नात्मा- वक्तृत्वादिविकाराभावात् । न मनः- मम मन इति भेद-प्रतीतेः । नान्तःकरणविशिष्टचैतन्यं- विशिष्टस्यापि तस्य तथाविधवृत्ति-सम्बन्धाभावादन्यथा तस्यापि भेदस्स्यात् । न चैतन्यविशिष्टान्तःकरण-मिति- तस्यापि ममेतिवचनायोगात् । किंच मनसश्चैतन्यविशिष्टत्वाभावे वृत्तेरेवाभावेन न मन इत्यनेनैव साधिष्ठानचैतन्यं मनो नेत्यर्थस्य वक्तृ-व्यतयाऽयं विकल्प एवानुपपन्नः । अतो मनो नैकं, नाप्यनेकं तव मत इतिचेत्, न तथा— किं त्वेकानेकम् । नन्विदमसम्भवमेकस्य मनस एकत्वमनेकत्वं चेतिचेत्, न—परमार्थदशायामेकं, व्यवहारदशाया-मनेकं चेति । नन्वेकस्य व्यवहारकालेऽपि कथमेकदा अनेकविध-वृत्तिमत्त्वं घटत इतिचेत्संस्काराणां भिन्नत्वात् ।

ननु एकदा भिन्नफलप्रदत्वेन परस्परं भिन्नानां तेषामेकत्र मनसि कथं सिद्धिरितिचेत्, न—तेषामपि व्यावहारिकत्वेन व्यवहारदशायामनेकेषु मनस्स्वनेकसंस्कारा वर्तन्त इति न दोष इति । ननु संस्काराणा-मपि परमार्थदशायामभावे सुप्तोत्थितानां देवदत्तादीनां चोरत्वादिसङ्कल्पाः नियमेन न वर्तेरन्नितिचेत्, न—तत्तद्देहसम्बन्धात्तत्तद्देहारम्भककर्मानु-गुण्येन तत्तत्सङ्कल्पवन्ति व्यावहारिकाणि मनांसि भवन्तीति ।

ननु तत्तद्देहारम्भककर्मैव परमार्थदशायां विनश्य व्यवहारदशायां किं पुनरुद्भूय एकैकस्मिन् मनसि वर्तते, अथवाऽविनश्य ? नाद्यः—देहारम्भककर्मणो विनाशे देहस्य तदैव विनाशापत्तेः । द्वितीये तु- अविनश्य संस्कारात्मना कुत्र वर्तते ? न तावदात्मनि- तस्य शुद्धचैतन्यत्वात् ; नापि परमार्थिके मनसि- त्वयैव संस्कारस्य पारमार्थिकत्वस्य निरस्तत्वात् । किंच भिन्नानां संस्काराणामेकस्मिन् समावेशविरोधात् ; नापि शरीरे- तस्य जडत्वेन, संस्कारस्य ज्ञानत्वेन च आश्रयत्वाऽयोगात् । नापि विशिष्टे- परमार्थदशायां तस्यैवाभावादितिचेत्, न—'एतस्मात्प्राणमयादन्योन्तर आत्मा मनोमय'इति श्रुतेः । प्राणोपाधिवशान्मनसो नानात्वमतः परमार्थेऽपि प्राणसद्भावेन नानाभूतेषु मनस्सु नानासंस्कारा वर्तन्त इति न दोषः ।

ननु भवत्वेवं मनसो नानात्वं, कथं प्राणस्य नानात्वं ? वायोरेकस्यैव वृत्तिभेदेन प्राणादिपञ्चविधीभूय प्रतिशरीरं वर्तमानत्वादितिचेत्तर्हि तत एव शरीरोपाधिवशात्प्रतिशरीरं प्राणो नानेति । ननु शरीरस्य कथं नानात्वं? पाञ्चभौतिकत्वेनैकतत्त्वत्वात्सर्वेषामितिचेत्पञ्चभूतांशन्यूनाधिकवृत्तितारतम्यात् , सत्त्वादिगुणभेदात्, रूपभेदात्, कर्मभेदात्, प्रत्यक्षपरिदृश्यमानकरचरणादिमत्पिण्डभेदादित्यादयो बहवस्तत्र हेतवस्तत्त्वैकत्वेऽपि व्यक्तिभेदप्रयोजकास्सन्ति । ननु शरीरपात एव मुक्तिः, क्रमेण सर्वोपाधिलयात् । तथाहि- शरीरे नष्टे प्राणमयो वायौ लीयते, प्राणमये लीने मन एकं सन्निर्वृत्ति वर्तते, तदेव मनसो लयः, तस्मिन् लीनेऽन्तःकरणे आत्मा विशिष्यत इतिचेत् , न—बाह्यो वायुः प्राणा

दान्तराद्भिन्नः, मृतशरीरस्य वायुप्रवेशे सत्यपि चलनादिरहितत्वा'दित्यनुमानेनानुभवेन च शरीरे पतिते प्राणोपाध्यविलयादिति ।

ननु तत्त्वविदोऽपि कथं तत्तदुपाधिभङ्ग इति चेत्- तत्त्वज्ञानात् । नन्विदमनुपपन्नम् , यदेकं वस्तु ज्ञानेनान्यथा भवतीति, न ह्यग्नी रत्नभ्रान्तिमतः पुरुषस्य दाहमप्रदायाऽग्निज्ञानिनः पुरुषस्य प्रदत्त इति चेत् , न—प्राणाद्युपाधीनामविद्योपाधिकत्वेनाविद्याया यदा विद्यया नाशस्तदा प्राणादीनां निरुपाधिकत्वेन वाय्वादिषु लय इति 'तत्त्वविदः प्राणा नोत्क्रामन्ती'ति श्रुत्याऽत्र प्रोक्तम् । नोत्क्रामन्तीत्यस्याऽनुत्क्राम्य वायौ लीयन्त इत्यर्थ इति ।

ननु यथा जलोपाधिभूतस्य घटस्य मुद्गरप्रहारेण नाशे निरुपाधिकतज्जलस्य जलाशये लयः, तथा प्राणोपाधिभूताया अविद्यायाः स्वरूपेसति तन्नाशेन प्राणानां वायौ लय उपपद्यते । तद्रूपं तु नैवेति कथमिदमिति चेत् , मैवम्—अहमित्यभिमानहेत्वविद्याहंकृतिप्रतिफलितचिदाभासस्य नष्टत्वादनाधारमिदं लिङ्गं हि । यतस्तादृशाभिमानेनैव लिङ्गजनिः ततस्स्वयमेव शीर्यते; अतः प्राणा अप्यनाधारा नोत्क्रमेयुः । परं तु स्वतत्त्वभूते वायावेव लीना भवेयुः । नानाभूतानामाकाशादितत्त्वानां चिदाभासस्य चाहंकृतिना तादात्म्याध्यासाभावे विवेचितैस्तैः कार्योत्पत्तिरेव न स्यात् ; ततस्तत्त्वविवेकेन कोशसद्भाव इति सर्वं सुष्ठु ।

नन्विदं स्थूलसूक्ष्मात्मकं सर्वं जगदविद्यावशात्प्रतीयते हि; तत्प्रतीत्यधिष्ठानं किमात्मा ? अथ वा ब्रह्म ? यद्वा जीवः ? उत मनः ? नाद्यः- जीवानामिव तत्साक्षिणामप्यात्मनां नानात्वेनैकैकस्मि-

न्नात्मन्येकैकप्रपञ्चप्रतीतिकल्पनापेक्षायां गौरवात्; अनेकानां प्रपञ्चानामसत्त्वाच्च; आत्मोपाधिभूतान्तःकरणानामनेकत्वेन सर्वैरप्यन्तःकरणैरेकाकारप्रपञ्चोपलम्भायोगात्; प्रत्यात्मनि संस्कारभेदेन बहुविधप्रपञ्चोपलम्भस्यावर्जनीयत्वाच्च । न द्वितीयः- तस्याविद्यायोगाभावात्; अन्यथा जीवत्वोपपत्तेः; मायायोगेनेश्वरोऽविद्यायोगेन जीवश्च ब्रह्मैव भवतीति भवन्मतराद्धान्तात् । नच विशेषणतत्सम्बन्धे तथा, उपाधिद्वारा तु ब्रह्मैव, न जीवेश्वरत्वं तस्येति वाच्यं, तथात्वेऽविद्योपाधिर्जीवसाक्ष्येव- मायोपाधेरीश्वरसाक्षित्ववचनात् । किं चोपाधिभूताया अविद्यायाः प्रपञ्चप्रतीतिहेतुत्वमेव नास्ति । अन्यथाऽऽत्मस्वरूपानुसन्धानदशायामपि संसारप्रतीत्यापत्तेः । न तृतीयः- स्वस्यैव प्रपञ्चान्तःपातित्वेन तदधिष्ठानत्वायोगात्; प्रमातृप्रमाणप्रमेयात्मकं हि जगत्- तत्र प्रमातुरेव जीवत्वात्, तस्य च मिथ्यात्वात्; न मनः- प्रमाणात्मकस्य तस्यापि जगत्त्वेन पूर्ववत्तदधिष्ठानत्वायोगादिति चेत्, न— ब्रह्मैव कल्पनाधिष्ठानं- मायाविद्ययोरभेदात्; आत्मोपाधयस्तु मायाकार्याण्यन्तःकरणान्येव- 'यावत्कार्यमवस्थायिभेदहेतोरुपाधि'तेति उपाधेर्भेदहेतुत्वेनोपाधिभूतापि माया ब्रह्मणि प्रपञ्चभेदं कल्पयतीति युक्तम् । आत्मस्वरूपानुसन्धानकाले तु यदुपाधिभूतमात्मनस्तदन्तःकरणमेव, नाविद्या; तस्य न तादृशसामर्थ्यमिति ।

ननु द्वेधा हि द्वैतं- ईश्वरसृष्टं जीवसृष्टं चेति । तत्रेश्वरसृष्टिसाधनमायाभावेन तद्द्वैताभावेऽपि जीवसृष्टिसाधनमनस्सद्भावेन तद्द्वैतोपलब्धेरपरिहार्यत्वात् कथमात्मस्वरूपानुसन्धाने तदनुपलम्भ इति चेत्, न—तदानीं तद्वृत्तिनिरोधात्; वृत्तिसद्भाव एव हि मनोराज्यम् ।

ननु यदा अन्तःकरणतादात्म्याध्यासः पुरुषस्य तदाऽहमिदमाकारवृत्तिसद्भावः, यदा नाध्यासस्तस्मान्नो तदा न वृत्तिरिति लब्धत्वेन विशेषणीभूतान्तःकरणस्यैव मनोराज्यरूपजीवाद्वैतहेतुत्वं नोपाधिभूतस्येति कथं मायाया उपाधिभूतायाः जगत्कल्पनाहेतुत्वम्? किंचान्तःकरणोपाधीनां नानात्वेन साक्षिणां परस्परभेदस्य हेतुत्वेऽपि मायाया एकत्वेन तदुपाधिलक्षणभेदहेतुत्वमपि न घटते, प्रपञ्चभेदहेतुत्वमिति तु न वाच्यं, उपाधिभूततत्सकाशात्प्रपञ्चकल्पनाया एव अघटितत्वात्। किंच ब्रह्मणो मायातादात्म्याध्यासाभावे सङ्कल्पाद्यनुदयात्- 'तदैक्षत बहुस्यां प्रजा'येयेति श्रुत्युक्तेक्षणमपि न घटते; किमुत सृष्टिरितिचेत्तर्हि विशेषणीभूतया माययैव कल्प्यत इति वदामः।

ननु मायाविशिष्टस्येश्वरत्वेन तस्य च मिथ्यात्वे कथं जगदधिष्ठानत्वमिति चेत्, न तथा—युज्यत एव हि मिथ्याभूतरज्ज्वादेः सर्पाद्यधिष्ठानत्वम्। ननु तादात्म्याध्यासो ह्यज्ञानमूलकः, स जीवे घटते- परतन्त्रत्वात्; तादृशाज्ञानसद्भावात्तदज्ञानमेव खलु माया तथा च माययाऽन्तःकरणतादात्म्याध्यासो भवति जीवस्येत्युचितं, कथं पुनरीश्वरस्येति चेत्तर्हि- मायैवाचिन्त्यशक्तिमत्त्वेन स्वेन सह तादात्म्याध्यासजनने ईश्वरस्य स्वयमेव हेतुर्भवतीति विद्धि।

ननु तर्हि तस्यापि मेवस्यैव मायापारतन्त्र्यं स्यादितिचेत्, न—यथाऽस्य जीवस्य बुद्धत्वे स्वान्तःकरणं स्वायत्तं, तथा ईश्वरस्य सर्वज्ञत्वेन स्वमाया स्वाधीनेति। ननु यथा जीवो मुग्धत्वेऽन्तःकरणवशः, बुद्धत्वे वशीकृतान्तःकरणः तद्वदीश्वरोऽपि प्रथमतोऽज्ञः पश्चात्सर्वज्ञो भवेत्; अन्यथा तादात्म्याध्यासानुत्पत्तेः। तथा तस्याज्ञत्वे न

कापि श्रुतिः प्रमाणमिति । तदलमयमप्रमाणो वा । आदौ तावन्मायया सह तादात्म्याध्यासः किं ब्रह्मणः ? उत मायायाः ? यद्वा ईश्वरस्य ? अथ वाऽन्यस्य ? न ब्रह्मणः- अविकारित्वात् ; न मायायाः- स्वस्य स्वेन तादात्म्याध्यासानुपपत्तेः ; नेश्वरस्य- तादात्म्यात्पुरा तस्यैवासिद्धेः; नान्यस्य अप्रसिद्धेरिति चेत्, न—अन्यस्य प्रतिबिम्बस्य सद्भावात् ।

ननु मुखस्थानीयस्य चैतन्यस्य दर्पणस्थानीयाया मायायाश्चामूर्तत्वेन कथं प्रतिबिम्बाविर्भाव इति चेत्, न—मायायां ब्रह्मणः सत्यज्ञानानन्दानां स्फुरणमेव प्रतिफलनं; यथा बुद्धौ साक्षिसत्याद्याधानामयमेव पश्चात्तत्तादात्म्याध्यासेन भवतीश्वरः । नन्वियं माया किं ब्रह्म, उत तदन्यत् ? नाद्यः- जडत्वात् । न द्वितीयः- तस्या अपि ब्रह्मणि कल्पनाहेतोः कस्यचिद्वक्तव्यत्वेनानवस्थानादिति चेत्, न—'माया चाविद्या च स्वयमेव भव'तीति श्रुत्या ब्रह्मभिन्नापि माया ब्रह्मण्यधिष्ठाने स्वत एव भवतीति ।

नन्वनादिभावरूपायास्तस्याः कथं भवनमितिचेत्, न—भूधातोः सत्तार्थकत्वेन भवतीत्यस्य सत्तावतीर्थः । नन्वनृतरूपायां मायायां कथं स्वतस्सत्ताशालित्वमस्या अयङ्गीकृतम् ? स्वतस्सत्तायां पुनः कथं ब्रह्मसत्त्वांशप्रतिफलनमिति चेत्, न तथा- ब्रह्मसत्तयैव सत्तावत्त्वमस्याः । ननु सर्वस्यापि तथात्वेन कथं मायाजगतोरनादित्वसादित्वरूपभेद इति चेत्- अन्यकल्पितत्वानन्यकल्पितत्वाभ्यामिति विद्धि ।

ननु जगन्मायया कल्पितं, ब्रह्मसत्तया सत्तावच्च, माया तु कथं स्वतः कल्पिता ? अकल्पितत्वाङ्गीकारेऽमिथ्यात्वादिति चेन्नैवम्—

माया नाम ब्रह्मणो जगत्सर्जनशक्तिः; सा चाग्नौ दाहशक्तिवद्ब्रह्मण्येव वर्तत इति । ननु यथाऽग्नेः सत्यत्वेऽग्निशक्तेरपि सत्यत्वं लोके दृष्टं, तथा कथं ब्रह्मणस्सत्यत्वे तच्छक्तेर्मिथ्यात्वमिति चेत्, न—ब्रह्मव्यतिरेकेण तस्याः अनुपलभ्यमानत्वेन सदसदनिर्वचनीयत्वरूपमिथ्यात्वस्य तस्यां सत्त्वात् ।

ननु अग्नाविव ब्रह्मण्यप्येकैव शक्तिरस्तु, कथं पुनर्लयरक्षणशक्ती इतिचेत्, न तथा—बीजादिष्वंकुरवीर्याद्युत्पादकबहुविधशक्तिदर्शनात् ।

ननु कथं विरुद्धशक्तिस्वभाव इतिचेत्, मैवम्—जलादिषु क्लेदनमारणतापापनयनादिविरुद्धशक्तिसद्भावात् । तथाहि- यज्जलं पीत्वा पुमान् दाहमपनुदति, तत्रैव पतित्वा प्राणान् जहाति । येनाग्निना शीतमपाकरोति, तस्मिन्निपत्य म्रियते । ननु यथाकथंचिद्विरुद्धशक्तीनां सामानाधिकरण्यमस्तु, कथं पुनस्तासां ब्रह्मशक्तीनां एकमायाशक्तिव्यपदेश इतिचेत्, मैवम्—शक्तेरेकत्वमेव, तद्विषयाणां तु पुनरनेकत्वमेव यथा शब्दज्ञानं स्पर्शज्ञानं पटज्ञानमित्यत्र शब्दादीनामेव भेदः, नतु पुनर्ज्ञानस्य, तथा घटशक्तिः पटशक्तिः सृष्टिशक्तिर्लयशक्तिरित्यादौ घटादीनामनेकत्वेऽपि शक्तेरेकत्वमेव । ननु स्वशक्तौ स्वस्य कथं प्रतिप्रतिफलनमितिचेत्, माशङ्किष्ठाः—दृश्यते ह्यग्निशक्तावग्निसत्ताप्रतिफलनं- अग्न्यतिरेकेण तस्याः सत्त्वाभावात् ।

ननु भवतु मायायां सत्यज्ञानादिप्रतिफलनं, कथं तस्य प्रतिबिम्बस्य सर्वज्ञत्वादिकमितिचेत्तदपि तस्मिन् मायैव कल्पयतीति विद्धि । ननु माया नामाज्ञानमिति पुरोक्तं, कथमधुना शक्तिरितिचेत्तस्या एव नामान्तरं- अज्ञानादेव हि ब्रह्मणि प्रपञ्चप्रतीतिर्जायते ।

ननु यथाऽविद्या रज्जौ सर्पभ्रान्तिं जनयति मनुजाय, तथा ब्रह्मणि जगद्भ्रान्तिं कस्मै जनयति- अतिरिक्तस्य कस्याप्यभावादिति चेत्, मैवम्—प्रतीतिजननं नाम ब्रह्मणि जगदुत्पादयित्वा माया पश्चादुत्पन्नस्य जगतस्तत्प्रतीतिं जनयतीति वक्तव्यम्। अतो माया ब्रह्मणि जगदुत्पादयति; यथा स्रजि सर्पमिति। ननु स्रजि सर्पो नोदेति; किं तु काचकामलादिदोषदूषितचक्षुषो नरस्य स्रक्सर्पतया भाति। अन्यथा तादृशजातसर्पस्य प्रसिद्धसर्पवत्सत्यत्वेन दशनाद्यर्थक्रियाकारित्वं स्यात्; अतो न तद्ज्ञानं भ्रमः; किं तु प्रमैव। किं च प्रसिद्धसर्पस्येव तस्य ज्ञाननिवर्त्यत्वमपि न स्यात्; प्रसिद्धसर्पस्यापि मायाकार्यत्वादिति चेत्, मैवम्—माया ब्रह्मणि स्थित्वा यद्यदुत्पादयति तत्तदर्थक्रियाकारि व्यावहारिकसत्तावच्च; रज्ज्वादौ स्थित्वा यदुत्पादयति तन्नार्थक्रियाकारि, प्रातिभासिकसत्तावच्चेति; अधिष्ठानभेदेन मायाकार्ययोर्जगत्सर्पयोर्भेद इति।

ननु ब्रह्मशक्तेर्मायायाः कथं रज्ज्वादौ स्थितिरिति चेत्, न—तत्रापि ब्रह्मणस्सत्त्वात्तस्मिन्नेव तस्याः स्थितिरिति।

ननु तर्हि कथमधिष्ठानभेदात्क्रियाभेद इति फणितमिति चेत्, उच्यते—निरुपाधिके ब्रह्मणि जगत्कार्यं, रज्ज्वाद्युपाधिके तस्मिन् सर्पादिकार्यमिति भेदः। ननु प्रपञ्चोपादानस्य ब्रह्मणः कथं वा निरुपाधिकत्वमिति चेत्- मायाव्यतिरिक्तोपाधिराहित्यं तत्र विवक्षितमिति जानीहि। नन्वेवमपि तदैक्षतेति श्रुतिवशान्मायाविनस्सत्यसङ्कल्पस्येश्वरस्य मायावशात्तत्तेजोऽसृजतेति सृष्टिहेतुत्वं श्रुतम्। अत ईश्वरोपाधिकब्रह्मणि स्थित्वैव माया जगज्जनयतिः न साक्षाद्ब्रह्मणीति कथं जगतोऽर्थ-

क्रियाकारित्वमिति चेत्, मैवं मंस्थाः—ईश्वरब्रह्मणोरभेदात्; बिम्ब-प्रतिबिम्बभावेन भेदवचनेऽप्युभयत्रापि मायाया एवोपाध्यायितत्वात्। तदित्थं-- माया ब्रह्मणीश्वरं जनयति तावत्पश्चादीश्वरे जगदिति।

ननु मिथ्याभूतस्येश्वरस्य कथं जगदधिष्ठानत्वं- 'यतो वा इमानि भूतानि जायन्ते, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इत्यादि-श्रुतयः, 'जगद्ब्रह्मणि कल्पित'मित्यादिस्मृतयश्च जगदुपादानत्वं ब्रह्मण एव बोधयन्ति। किंच युक्तिरपि मानं तत्र। तथाहि- व्यावहारिकसत्तावा-न्पारमार्थिकसत्तावान्प्रातिभासिकसत्तावानिति त्रिविधो हि पदार्थः। तृतीयो रज्जुसर्पादिः- पारमार्थिकमिथ्याभूतरज्ज्वाद्यधिष्ठानोऽनर्थक्रिया-कारी। प्रथमस्तु- पारमार्थिकसदधिष्ठानोऽर्थक्रियाकारी। द्वितीयस्तु-- पारमार्थिकं ब्रह्म। तदित्थं सद्रज्जुस्सर्पश्चेति त्रिविधं वस्तु सिद्धम्। ईश्वरस्यापि जगत्कल्पनाधिष्ठानत्वोक्तौ सत्त्वत्र कल्पित ईश्वरः; तत्र रज्जुः, तत्र सर्पश्चेति वस्तुनश्चातुर्विध्यं दृश्यते। नहि तथा प्रमाणमनुभवो वा। नचोभयमपि ईश्वरजगद्रूपं व्यावहारिकसत्तावदिति वाच्यं, अधि-ष्ठानगतपारमार्थिकत्वापारमार्थिकत्वाभ्यां हि व्यावहारिकप्रातिभासिकयो-रर्थक्रियाकारित्वतदभावरूपभेदः प्रतिपादितः। तथा च जगदधिष्ठान-स्येश्वरस्यापारमार्थिकत्वेन जगतस्सर्पवदनर्थक्रियाकारित्वमेव स्यादितिचे-न्नैवम्—ईश्वरमाया ब्रह्मण्येव जगत्कल्पयतीत्यभिप्रायात्। अहो बत! अस्माभिरिव युष्माभिरपि ईश्वरो मायया जगदुत्पादयति। पुरुषा अनेके, अन्तःकरणोपाधयो नना आत्मन इत्युक्तमेव भवतु। अथ प्रकृते—

ननु यथा ईश्वराविद्या ब्रह्मणि जगज्जनयति, तथा रज्जुमायापि

न किं ब्रह्मणि सर्पं जनयति । इष्टापत्तौ- कथं तस्या अनर्थक्रियाकारित्व-मितिचेत, उच्यते—माया नाम शक्तिःखलु, ईश्वरस्य सर्वज्ञत्वादि-गुणविशिष्टत्वेन तस्य जगदुत्पादनशक्तिः- जगतोऽर्थक्रियाकारित्वजनन-शक्तिरप्यस्ति । अर्थक्रियाकारिजगज्जननमायाशक्तिमानीश्वर इति भावः । रज्ज्वादेर्न तादृशी शक्तिः, किंत्वनर्थक्रियाकारिसर्पादिजननशक्तिरस्ति । अतोऽधिष्ठानसामर्थ्यादेव नार्थक्रियाकारित्वमारोपितस्य, किंतु माया-श्रयसामर्थ्यादपीति ।

ननु प्रपञ्चजननसामर्थ्यं ब्रह्मण इति पुरा उक्तं, कथमधुनेश्वर-स्येति । किंच ब्रह्म सत्यं जगन्मिथ्येति ब्रह्मातिरिक्तस्य सर्वस्य मिथ्या-भूतत्ववचनादीश्वरस्यापि मिथ्यात्वेन जगदन्तःपातित्वाज्जगत ईश्वरस्य कथं जगज्जननशक्तिरितिचेत्, नैष दोषः—ईश्वरस्य ब्रह्मभिन्नत्वा-सिद्धेः । नच मिथ्याश्रुतिविरोधः, ईश्वरत्वेन रूपेण मिथ्यात्वाद्ब्रह्मरूपेण सत्यत्वाच्चेश्वरस्य । ननु जगदपि तथैवेतिचेत, नेति को वदेत्—सर्वं खल्विदं ब्रह्मेतिश्रुतिरपि हि तत्र प्रमाणं; तर्हि ईश्वरस्य जगतस्सकाशा-त्को वा भेद इतिचेत्, शृणु—ब्रह्मण्यारोपितत्वांशे अविशेषेऽपि प्रतिबिम्बभूतत्वेन विशिष्यत इति ।

ननु ब्रह्मणीश्वरहेतुरीश्वरे जगद्धेतुर्जगति सर्पादिहेतुः शक्तिर-स्तीति फलितम् । तादृशशक्तीनां विषयभेदात्, भेदेपि वस्तुत एकत्वं च स्पष्टीकृतं । किंतु सा शक्तिराश्रयानुगुणं चेष्टते, अन्यथा पूर्वोक्तमर्यादातिक्रमदोषात् । तथा च वटबीजे वटवृक्षोत्पादनशक्ति-रस्ति, नतु अश्वत्थोत्पादनशक्तिः; कथमधुना शुक्तिकादेः रजता-

द्युत्पादनशक्तिरिति चेद् बीजांकुरन्यायेन सर्वजगज्जननशक्तेरपीश्वरीयत्वेन बीजादावंकुरादिजननशक्तिरीश्वरस्यैव; न बीजादेः । परंतु बीजादीनां तादृशेश्वरशक्त्युद्बोधकत्वमेव, रज्ज्वादेस्सर्पाद्युत्पादने तु नेश्वरशक्तिः; किंतु रज्ज्वादिशक्तिरेवेति ।

ननु क्वेदं दृष्टमिति नियमं, यत्कारणस्य यादृशकार्यजननौचित्यं, तत्कार्यजननशक्तिर्न स्वस्य; किं त्वीश्वरस्येति । यत्कार्यजननानौचित्यं तज्जननशक्तिस्स्वस्येतीति चेत् , मैवम्— उपादानसमसत्ताककार्यापत्तिः परिणामः, उपादानविषमसत्ताककार्यापत्तिर्विवर्त इति वेदान्तशास्त्रं हि मानम् । अन्यथा कथं सच्चिदानन्दाद्ब्रह्मणोऽनृतजडदुःखात्मकजगदुत्पत्तिरिति । ननु तर्हि रज्ज्वादेर्गरुडादिरुद्भवतु, सर्पादिरेवेति कोऽयं नियमः- उभयविरोधकार्यस्याप्युपादानविषमसत्ताकत्वादिति चेन्न— उपादानविषमसत्ताकमपि कार्यमुपादानसमानाकारमेव जनयत्युपादानशक्तिरिति ।

ननु तथैव निराकाराद्ब्रह्मण उपादानान्निराकारमेव जायतां, कथं पुनस्साकारं जगदिति चेन्मैवम्—यत्राकारसद्भावस्तत्र तत्सादृश्यमपेक्षते; यत्र न तत्सद्भावस्तत्र तद्विषमसत्तामात्रमेवापेक्षत इति । यथाऽन्धकारे पिशाचानाविर्भावयत्यन्धकारशक्तिस्तद्वदिति ।

ननु शुक्तिकादौ रजतादिजननशक्तिः किं सर्वदाऽस्ति, उत कदाचित् ? नाद्यः- प्रकृष्टातपे रजतप्रतीत्यभावात् ; न द्वितीयः-- शक्तिनियामकस्यान्यस्याभावादिति चेन्मैवम्—सर्वदाऽप्यस्त्येव; किं तु सति प्रतिबन्धे आतपादिरूपे स्वकार्यं न जनयति । यथा मणिसमव-

धानदशायामग्निशक्तिः । ननु यदि रज्जुस्सर्पं जनयति तर्हि सर्प-क्रीडनकेन स्पृष्टः स रज्जुसर्पो दशनाद्यर्थक्रियाऽकर्ताऽपि शीतल-मृदुलमांसलस्पर्शजनकोऽपि कुतो न स्यादिति चेत्, शृणु—प्रति-भानसमयनियतसत्तावत्त्वात्तस्य । यदा प्रतीतिस्तदैव जन्म, यदा धैर्या-स्स्पृशति तदैव लय इति । ननु मृतस्यापि सर्पस्य तथाविधस्स्पर्शोऽस्ति हि कुतः पुनरस्य नेति चेत्, शृणु—लयो नामाऽस्य न प्राणोत्क्र-मणं- पुरापि तदभावात्; किं तु रज्जुरूपेणावस्थानम् । ननु केय-मुत्पत्तिर्नामेति चेत्, शृणु—सर्परूपेण भानम् । अहो बत ! अस्म-न्मतगदितमन्यथाभानमिदमेव हि । एतावता महता प्रयासेनोत्पत्तिवादं परित्यज्य पुनः प्राक्तनमेव प्रतीतिवादमङ्गीकृतवानसि । यद्रज्जोस्सर्पा-कारेण भानं सर्पोत्पत्तिः, रज्जुरूपेण भानं सर्पलय इत्युक्तवान् ।

ननु सर्पाकारेण भानमिति त्वद्वचोऽनूद्य मयोक्तं, परं तु न मया तदङ्गीकृतमिति चेत्तर्हि केयमुत्पत्तिः ? किं प्राणयोग. ? उत पूर्वसंस्थानस्थितस्योत्तरसंस्थानयोगः ? यद्वा तुल्याकारयोगः ? अथवा चेष्टनम् ? न तावदाद्यः- सर्पस्यापि रज्जोः प्राणाभावात् । अत एव न तुरीयः- न ह्यप्राणस्य गमनागमनादिचेष्टास्सङ्घटन्ते । न द्वितीयः- पूर्व-संस्थानत्यागपूर्वको हि देहिन उत्तरसंस्थानयोगः । अत्र तु रज्जौ न देही कश्चन विद्यते । नच तस्य रज्जुदेहत्यागो दृश्यते; न वा सर्प-देहप्राप्तिः । न तृतीयः- सर्पतुल्याकारस्य पुरैव स्थितत्वादिति चेत्, नहि- अत्रोत्पत्तिर्नामोपादानविषमसत्ताककार्यापत्तिरिति ।

ननूपादानविषमसत्ताकं कार्यमेव नास्तीति कुतस्तदापत्तिः सर्वस्यापि घटकुण्डलादेरुपादानमृत्कनकसमसत्ताकत्वस्य दृश्यमानत्वात् ।

नच शुक्तिविषमसत्ताकरजतकार्यमत्र दृष्टान्त इति वाच्यं, तस्य तथा-विधस्यान्यस्य वोभयवादिसम्प्रतिपन्नत्वाभावादिति चेन्मैवम्—मुद्गर-घटध्वंसादेर्दृश्यमानत्वात् । ननु घटध्वंशो न भावकार्यं, नापि तस्य मुद्गर उपादानं; किं तु निमित्तमेवेति न तद्दृष्टान्त इति यदि तर्हि रज्जुसर्पभ्रमस्य प्रसिद्धस्य का गतिरित्यस्माभिरिदमङ्गीकृतम् ।

नन्वन्यथाभानमस्ति खलु तस्य गतिः, इदमेव हि भ्रान्तिज्ञानं यदन्यदन्यथा प्रतीयत इति । यदि सर्पस्य जनिरेव तत्र, न तत्प्रतीति-कालेऽन्यस्यान्यथाभानरूपं भ्रमत्वमपि सङ्गच्छेत- रज्ज्वादितस्सर्पस्यैव सर्पत्वेन भानात् । अतः काचकामलादिदोषदूषितचक्षुषः पुरुषस्याज्ञा-नात् स्रजि सर्पभ्रान्तिर्जाता; अज्ञानमपि पुरुषाश्रयमेव, न स्रगाश्रयं-- स्रजो न जानामीत्यज्ञानानुभवाभावाज्जडत्वेन हेतुना । सर्पप्रतीतिजनन-शक्तिस्स्वस्स्यैव- सर्पसमानाकारतयैव रज्जौ तत्प्रीतिसम्भवात् । अतोऽ-ज्ञानमन्यच्छक्तिरन्येत्यङ्गीकर्तव्यं भवतापीति चेत्, न तथा— यदि स्वाज्ञानं तर्हि मामहं न जानामीत्येव प्रतीतिस्स्यात्, न पुनः रज्जुं न जानामीति; अतो रज्ज्वाश्रयमेवेति चेन्नहि नहि—स्वविषयकं यद्यज्ञानं तदा त्वदुक्तप्रतीतिः । इदं तु रज्जुविषयकमतो न दोषः ।

अयं भावः—घटं जानामीत्यादौ यथा घटो ज्ञानविषयः, तादृशज्ञानाश्रयः पुरुषो घटविषयकज्ञानवानहमिति शाब्दबोधोत्पत्तेः, तथा घटं न जानामीत्यादावज्ञानविषयो घटस्तादृगज्ञानाश्रयः पुरुष इति ।

ननु अज्ञानस्याभावरूपत्वे त्वदुक्तं सङ्गच्छते, अस्मन्मते भावरूपमेवेति न दोष इतिचेत्, ननु यथा घटज्ञाने घटो विषयस्तथा

तदज्ञाने किमिति घटो न विषयः, कथं वा पुरुषो नाश्रय इतिचेन्मैवम्-घटस्य जडत्वेन ज्ञानाश्रयत्वाभावस्येष्टत्वेऽपि अज्ञानाश्रयत्वं किमिति विरुध्यते । ननु न जानामीत्याकारकं अज्ञानं, तदपि ज्ञानमेवेति कथं वा तदाश्रयत्वं घटस्येतिचेत्, किंच यदिदं घटाज्ञानं तर्हि कथं पुरुषस्य न जानामीत्यज्ञानानुभवः । विरुद्धं हीदं यदेकत्राज्ञानं स्थित्वा अनुभवात्मकं न जनयति; अन्यत्रास्थित्वा न जनयतीतिचेत्, न—विषयाकारान्तःकरणवृत्तिर्हि ज्ञानम् । तथा च घटाज्ञानाकारान्तःकरणवृत्तिर्घटं न जानामीत्याकारकं ज्ञानं भवितुमर्हति । ततो यदा स्वाज्ञानमन्तःकरणवृत्तिविषयं; तदा मामहं न जानामीति प्रतीतिरिति ।

ननु तथात्वे घटाज्ञानान्तःकरणवृत्तिर्घटाज्ञानमहं जानामीत्येवंरूपा स्यात्, अतोऽज्ञानं न भावपदार्थः, न वा विषयनिष्ठमिति चेत्तर्हि घटादौ न जानामीत्यनुभवजनका काचन शक्तिरस्ति; तया पुंसस्तादृगनुभवो भवेत्; अतो ज्ञानमपि शक्तिरेव न पृथगिति ।

ननु तादृक् शक्तिरज्ञाते ज्ञाते वा घटादौ वर्तते ? नाद्ये—शक्त्युत्पत्तेः प्राक् शक्तिकार्यानुभवविषयत्वस्यैवाभावात्- अज्ञातो नाम न जानामीत्यनुभवविषयो हि । न द्वितीये- ज्ञाततया शक्तेर्निवृत्तत्वेन वृत्त्ययोगादितिचेत्, मैवम्—शक्तेरनादित्वेन उत्पत्त्यभावात् । घटादौ विद्यमानैव शक्तिरज्ञाततां जनयति, अतोऽज्ञाते घटे शक्तिरस्तीत्यनुमीयते; ज्ञाते तु ज्ञाननिवृत्तत्वेन शक्तिर्नास्तीति । ज्ञाननिवर्त्यमनादिभावरूपं हि शक्तिपर्यायमज्ञानमिदमेव माया, तद्वस्तुमात्रे शक्तिरस्ति । साच एतद्वस्त्वहं न जानामीत्यनुभवं पुंसो जनयति, धीवृत्त्या तु सा नश्यति ।

ननु भवत्वेवं रज्ज्वादिशक्तेः रज्जुमहं न जानामीत्याद्यनुभव-जनकत्वं, अथ कथं सर्पादिजनकत्वाभावेपि सर्पाद्यनुभवजनकत्वमिति चेत्, न—कदाप्यज्ञाते घटादौ वर्तमाना सा शक्तिर्न जानामीत्यनु-भवं जनयति, ज्ञाते स्थिता तु विपरीतानुभवमिति । नन्वहो ते कौशलं- ज्ञाते ज्ञाननिवृत्ता शक्तिरिति त्वया पुरोक्तमितिचेत्तर्हि घटादौ सन्ति बह्व्यश्शक्तयः । तथाहि- घटे पूर्वोक्तशक्तिरेका, करिकुम्भ-प्रतीतिजननशक्तिरन्या, तण्डुलभरणशक्तिरपरा, कपालोत्पादनशक्ति-रितरा एवमाद्यस्सन्ति । अतो घटं जानामीतिज्ञानेन तदज्ञानशक्ते-र्निवृत्तावपि नेतरासामिति न दोष इति ।

ननु तर्हि जानामीत्यनुभवजननशक्तिरपि तस्यैवेति वाच्यं, भवतु को दोषः । ननु भवतु स्वशक्त्या कयाचित्स्वशक्तेरेव कस्याश्चि-न्निवृत्तिः, यथा ज्ञानशक्त्या अज्ञानशक्तेः । कथं तर्हि धीवृत्त्या नश्य-तीत्युक्तमिति चेत्तर्हि शृणु—ज्ञानशक्त्या नाज्ञानशक्तेर्निवृत्तिः, किंतु तत्कार्येण ज्ञानेन; तच्च धीवृत्त्यात्मकमिति ।

नन्वेतादृशशक्तयस्सर्वाश्च पूर्वोक्तन्यायेन विषयत्यागरूपेण कि-मेकैव शक्तिः ? उतानेकाः ? नाद्यः- तस्याज्ञाननिवर्त्यत्वेन दिने रज्जुं दृष्टवतः पुंसः पश्चाद्रात्रौ तस्यामन्यस्यां वा रज्जौ सर्पप्रतीतिर्न जायेत, तादृक्प्रतीतिजननशक्तिमात्रस्य रज्जुदर्शनेनैव नष्टत्वात् । न द्वितीयः- शक्तिलक्षणस्य ज्ञाननिवर्त्यत्वस्य बन्धनादिशक्तिष्वभावात् । किं चैकपुरुषधीवृत्तिविनाशिताज्ञानशक्तित्वेन घटादेरपरपुरुषस्य तादृ-शाज्ञानानुभवजनकत्वमपि कथं स्यादिति चेत्तर्हि- शक्तेर्न नाशः, किंतु

तत्कार्यस्यैव । तथा च यस्य पुरुषस्य घटादिशक्तिर्न जानामीति कार्यं जनयति, तत्कार्यमेव तत्पुरुषज्ञानेनैव निवर्त्यते; न तु तच्छक्तिः । अतोऽन्यस्य घटादिशक्तिरज्ञानानुभवात्मकं कार्यं जनयेदेव । यथा लूनशाखोऽपि तरुर्मूलसद्भावेन पुनः कार्यं जनयति तथेति ।

ननु तस्यैव पुनस्तत्कार्यं किमिति न जनयति तच्छक्तिरिति चेन्नैवम्—तत्र पुरुषे तद्धीवृत्तिरूपस्य तत्संस्काररूपस्य वा प्रतिबन्धस्य सत्त्वात् । तदेव घटाद्यज्ञानशक्तिर्धीवृत्तितत्संस्कारान्यतरप्रतिबन्धरहिता न जानामीत्यनुभवकार्यं जनयति; ततो घटज्ञानवतः पुंसो घटज्ञानरूप-धीवृत्तिप्रतिबन्धस्य सत्त्वाद्घटाज्ञानशक्तिः तत्स्वकार्यं न जनयति । ननु तर्ह्यनादिभावत्वे सति ज्ञाननिवर्त्यत्वमिति यदुक्तं शक्तेर्लक्षणं तत्कथं सङ्गच्छते, शक्तेर्ज्ञाननिवर्त्यत्वाभावादिति चेत्तर्हि- कार्यस्य निवृत्तत्वेन निष्कार्यं कारणं निवृत्तप्रायमेवेति ज्ञाननिवर्त्यत्वमुपचारेण कारणस्यै-वोक्तमिति ।

नन्वेवं ज्ञानानिवर्त्यकार्यवत्त्वस्य शक्तिलक्षणत्वे तण्डुलभरण-शक्तिकार्यं तण्डुलभरणं ज्ञानेन न निवर्त्यत इति कथं तच्छक्तौ तल्ल-क्षण इतिचेत्, तर्हि शृणु—अनादिभावत्वे सति प्रतिबन्धे असति कार्योत्पादकत्वं शक्तिमात्रस्य लक्षणं, इदमेवाज्ञानविपरीतज्ञानव्यति-रिक्तशक्तिषु विशेषणलक्षणं च । तच्छक्तिद्वयस्य तु अनादिभावत्वे सति प्रतिबन्धे असति ज्ञाननिवर्त्यकार्योत्पादकत्वमिति लक्षणम् । अतो ज्ञानेन न सर्वशक्तिकार्यनिवृत्तिरिति न दोषः । अत एव ब्रह्मज्ञानेन ब्रह्माज्ञानकार्यं ब्रह्म न जानामीति, ब्रह्मविपरीतज्ञानकार्यं ब्रह्म प्रपञ्चतया

जानामीति द्विविधानुभवस्य नष्टत्वात्संसारनिवृत्तिर्वेदान्तेष्वाभिहिता; अन्याथा ज्ञानेन प्रपञ्चस्वरूपोपमर्दनाभावात्संसारनिवृत्तिर्न घटेतेति ।

ननु जगत्कार्यजननशक्तिर्ब्रह्मणः श्रूयमाणा माया किमज्ञानरूपा उत विपरीतज्ञानरूपा, अथ वा घटादेः कपालोत्पादनादिशक्तिवत्सहजा ? न प्रथमद्वितीयौ- तद्ब्रह्मशक्तिकार्यजगत्स्वरूपोपमर्दनाभावात् । न तृतीयः- सच्चिदानन्दाद्ब्रह्मण उपादानात्तद्विषमसत्ताकस्य अनृतजडदुःखात्मकस्य जगत उत्पत्तेरसहजत्वादितिचेत्तर्हि ब्रह्मणि विपरीतकार्योत्पादनशक्तिः, विपरीतज्ञानजनकशक्तिरित्यादयो बहवश्शक्तयस्सन्ति । अतो ब्रह्मण्येकया शक्त्या जगत्युत्पादिते सत्यन्यया तत्र सत्यत्वादिबुद्धिर्भवति । किंच ब्रह्मण्यपि जगद्रूपत्वज्ञानं तथैव । अत उत्पन्नं जगत् न संसारदायि पुंसः, किंतु तत्सत्यत्वज्ञानं कार्यं कारणात्मकमिति न्यायस्य दृष्टत्वेन ब्रह्माप्यनृतजडदुःखात्मकमेव, ब्रह्मकार्यस्य जगतस्तत्त्वादित्यादिविपरीतज्ञानमेव संसारं जनयतीति । अत एव ब्रह्मणः सर्वशक्तित्वव्यपदेशः ।

नन्वेवमीश्वरस्य ब्रह्माभिन्नत्वेन सर्वज्ञस्सत्यसङ्कल्पस्सत्यकामस्सर्वशक्तिरीश्वरः स्वशक्त्या जगत्सृजतीति सिद्धः- सर्वशक्तीनामप्यैक्यात् । अग्निस्स्वशक्त्या दहतीतिवत् ; तदस्मन्मतमेव- कार्यकारणकर्तृत्वफलसाधनभेदतः । 'एको विभासि राम ! त्वं मायया बहुरूप'येति मायाया बहुरूपत्ववचनादेकस्याश्शक्तेर्बहुरूपत्वं वा, बहूनां शक्तीनामेकात्मकत्वं वा सिद्धमेव । ब्रह्मणोऽविकारित्वेन प्रकृतेर्जडत्वेन चेक्षणासम्भवात्कथमीक्षणपूर्विका सृष्टिरिति शङ्का ब्रह्मेश्वरैक्यान्निरस्ता । अत इदं लब्धम्—

नो शुद्धाज्जगतो जनिर्न च तथा मूढात्प्रधानाद्भवे-
त्तन्मायाशबलादिदं समभवत्सर्वेश्वरादीश्वरात् ।
मायैषा बहुरूपिणी बहुकृतिप्रोद्भावनादेतया
शक्त्या चाप्यनया चिताऽखिलमिदं व्याप्तं जरीजृम्भते ॥१॥

चिता चैतन्येन ब्रह्मणा ।

सत्तायाश्च चितेस्सुखस्य च परिस्फूर्तेरमुष्मिन्निदं
सर्वं ब्रह्मतया जगौ श्रुतिरथो शक्तेश्च मायामयम् ।
सर्वज्ञेश्वरमायया च पुरुषास्सम्मोहिता नो विदु-
स्स्वात्मानं चिदचिन्मयं च न जगन्नापीश्वरं ब्रह्म नो ॥२॥

जगद्ब्रह्ममायोभयात्मकत्वेन न विदुरिति भावः। शक्तिरिति जात्येकवचनं, परिस्फूर्तेरित्यनेन सम्बध्यते ।

आत्मानो बहवोऽस्वतन्त्रधिषणाश्चोपाधिभङ्गे सति
ज्ञानेनेश्वरसेवया समुपयान्त्यानन्दमव्याहतम् ।
अज्ञानं न च वेद्मि रूपमुदयत्यज्ञस्य पुंसो घटा-
दिस्था शक्तिरतो घटादिविषयं ह्यज्ञानमात्माश्रयम् ॥३॥

आत्मानस्साक्षिणः; आत्मा जीवः ।

तत्तद्देहगजीवसाक्षिबहुता विद्राविताऽस्सर्वमु-
क्त्यापत्तिर्विबुधैकमुक्तिवशतश्शिष्याद्यबोधो गुरोः ।
चैतज्ज्ञातपटानुसन्धिरहहा मैत्रस्य सच्चित्सुखं
ब्रह्मैवात्मतया विभाति हि मनोरूपोपधेर्भङ्गतः ॥४॥

अन्तःकरणोपाधिवशादात्मनामनेकत्वं, तेनैकमुक्तौ सर्वमुक्त्यादिदोषनिरासः; तदुपाधिभङ्गे त्वंद्वयं ब्रह्मैव ।

स्वोपादानविरुद्धकार्यजनने दृष्टान्तितो यत्त्वया
सत्यज्ञानबलक्रियादिनिधिरप्याहो हरी रज्जुना ।
तद्ध्वस्तं जगदैन्द्रजालिकतया प्रोक्तं च यत्तद्गतं
तस्मादद्य सुखं स्वपामि लुलितप्रत्यर्थिवादो ह्यहम् ॥५॥

मिथ्यात्वप्रतिपत्तिनेव जगतोऽनित्यत्वबुद्धया मम
भ्रष्टा संसृतिरङ्ग तादृशजगत्कर्तुः पदाम्भोजयोः ।
सेवा निर्मलचेतसा मम पुनस्साक्षात्कृता स्वाकृति-
र्धन्योऽहं कृतकृत्यता मयि मया प्राप्यं किमस्तीतरम् ॥६॥

किं पुनस्तव मतमिति चेत्- तत्र तत्राऽभिप्रायैकत्वेन वचनभेदप्रयुक्तभेदाभावेऽपि ब्रह्मणीदं जगन्मायया कल्पितम् । यथा इन्द्रजालिकमायया गगने गन्धर्वनगरमिति जगत ऐन्द्रजालिककृतित्ववादिमतं ममेति ।

ननु किमैन्द्रजालिकतुल्यो भगवानिति, अथवा तच्छक्तितुल्या भगवच्छक्तिरिति, यद्वा तच्छक्तिकार्यतुल्यं जगदिति त्वयाऽभिप्रेतम् ? नाद्यम्—सर्वज्ञत्वसर्वशक्तित्वसत्यसङ्कल्पत्वप्रमुखैः किञ्चिद्ज्ञत्वकिञ्चिच्छक्तित्वमोघसङ्कल्पत्वप्रमुखैश्च धर्मैरुभयोरत्यन्तविसदृशत्वात् । न द्वितीयम्-- रविदीपतेजसोरिव न्यूनाधिकत्वात् । न तृतीयम्-- अर्थक्रियाकारित्वाऽकारित्वाभ्यां भेदादिति चेन्मैवम्—शक्तिद्वयस्याप्यघटितघटनात्मकत्वेन तुल्यत्वात् । ननु तादृशाया अपीश्वरशक्तेरैन्द्र

जालिकशक्तेश्च स्वकार्यगतकालान्तरस्थायित्वाऽस्थायित्वाभ्यां भेद एवेति चेद्भवतु- एतावन्मात्रमेवास्माभिस्स्वीकृतम् ।

ननु तर्हि वयं कृतार्था एव । यतो ईश्वरस्सर्वशक्तित्वेन अघटमानमपि जगन्मायया घटयित्वा, तदपि कर्मानुगुण्येन द्रव्यानुगुण्येन च चराचरात्मकं कालान्तरस्थायि कृत्वा बहुधा नाटयति । ऐन्द्रजालिकस्तु स्वशक्त्यनुगुणं किञ्चित्क्वचित्काचिदघटितं घटयति । अतोऽर्थक्रियाकारि जगन्निर्मातुरीश्वरस्यानर्थक्रियाकारि किञ्चिद्वस्तुनिर्मात्रैन्द्रजालिकसाम्यं नास्तीति, तदिदमैन्द्रजालिकमिति मावमंस्था इतिचेत्, मैवम्—मायाकार्यत्वादैन्द्रजालिकमित्येव भणामीति ।

ननु तथात्वे बीजशक्तेर्वृक्षोत्पादकत्वमस्ति, इन्द्रजालस्याऽपि शक्तेस्तदस्ति; अतस्तदपि मायाकार्यमेवेति । किमिन्द्रजालमायातुल्यत्वमीश्वरशक्तेरितिचेद्बीजमायाया अघटितघटनात्मकत्वादिति विद्धि । नन्विदमप्यघटितमेव, यत्सूक्ष्मो वटबीजोऽतिविस्तृतमुपादानविरुद्धरूपं वटवृक्षं जनयतीतिचेदत एव जगतोऽचिन्त्यरचनात्वेन मायात्वमुक्तम् । किंच बीजादिशक्तिरीश्वरस्यैव- बीजांकुरन्यायेनैवेश्वरस्य जगत्कर्तृत्वप्रसिद्धेः । ननु तर्हि इन्द्रजालस्यापि जगदन्तःपातित्वेन तच्छक्तिरपीश्वरस्यैवेति कथं तत्साम्यं तस्य । किंच इन्द्रजालशक्त्या गन्धर्वनगरादिकं नोत्पद्यते, किंत्वस्माकं तथा प्रतीयते । अतो विषमो दृष्टान्त इतिचेन्मैवम्—उत्पद्यत एव- भ्रान्तिहेत्वभावात् ।

ननु भ्रान्तिहेतवो मणिमन्त्रादयः सन्त्येवेतिचेत्, मैवम्—तेषां शक्तेरेव इन्द्रजालशक्तित्वेन व्यपदेशः; केवलस्य पुंसो नहि

तादृशशक्तिः । ननु यदि उत्पद्यते तर्ह्यर्थक्रियाकारि स्यात्, अन्यथा तटाकोदकमरुमरीचिकाजलयोर्वस्तुत्वमिथ्यात्वे न घटेयाताम् । इयं हि लोकमर्यादा, यत्तटाकोदकादिकं वर्षासूत्पन्नं, तत्स्वपातृजनतापापनोदनरूपार्थक्रियाकारित्वात्सत्यं कालान्तरस्थायि च । यत्पुनर्मध्याह्नार्कमरुमरीचिकासु भ्रान्त्या प्रतीयमानं जलं तत्तत्रानुत्पन्नत्वेन तादृशार्थक्रियाकारित्वाभावात्प्रतीतिमात्रस्थितित्वान्मिथ्येति । अतः कथमैन्द्रजालिकवस्तूनामुत्पत्तिर्भवता प्रोच्यत इतिचेत्, मैवम्—अन्यस्य वस्तुन अन्यथा भानं हि भ्रमः, स रज्जुसर्पादौ भवतु- रज्ज्वादेस्सर्पाद्याकारेण भानात् । इन्द्रजाले तु गगने निरालम्बे परिदृश्यमानानां गन्धर्वनगरादीनां यद्यनुत्पत्तिस्तर्हि किं वस्तु तथा भाति न किमपीति । किंच अर्थक्रियाकारित्वाभावस्तु इन्द्रजाले स्वसृष्टवस्तूनामर्थक्रियाकारित्वप्रदशक्तिर्नास्ति, अत उत्पत्तिर्नार्थक्रियामपेक्षत इति । ननु यदि गगने गन्धर्वनगरादिकमुत्पद्यते, तर्हि तत्प्रतीतिसमयेऽपि निमीलितचक्षुषः पुंसस्तेषां स्पर्शादिकं स्यात् । अतो गगनमेव इन्द्रजालमणिमन्त्रादिशक्तिसहकृतं पुरुषनेत्रयोः नगराकारेण भासत इति मणिमन्त्रादिकृतचक्षुर्दोष एवायमितिचेत्तर्हि जगदपि तथैव ।

ननु दृश्यते ह्यन्धानामपि जगति व्यवहारः, अतस्सर्वविधव्यवहाराश्रयस्य कालान्तरस्थायिनोऽर्थक्रियाकारिणश्चराचरात्मकस्य जगतः तद्विलक्षणस्यैन्द्रजालिकनगरादेश्च महद्वैलक्षण्यमस्ति, तत्कर्तुरेतत्कर्तुश्च महद्वैलक्षण्यमस्ति, अतो न जगदैन्द्रजालिकं, नापि तत्कर्तैन्द्रजालः । अथ कोऽयमीश्वरः ? कुत्र स्थित्वा कथं वा जगत्सृजति ? कथं वा

नियमयतीति चेदुच्यते—मायावच्छिन्नचैतन्यमीश्वरस्सर्वत्र व्याप्य स्थित्वा नियमयति; सङ्कल्पमात्रेणैव सर्वं सृजते ।

ननु निश्शक्तिकं चैतन्यमेव नास्ति- सर्वस्य सशक्तिकत्वात्; निर्दाहशक्तिर्यथा नास्त्यग्निः । किंच सर्वस्य चिदचिन्मयत्वेन तदतिरिक्तपदार्थाभावात्; मायाया अचित्त्वेनेश्वरस्यापि चिदचिद्रूपत्वात् । स एव जगन्न ततः पृथगिति कथं तस्य स्वाभिन्नजगद्व्यापकत्वमाकाशस्य भूविवरव्यापकत्ववत्? कथं वा स्वस्य स्वेन नियमनम्? अपि च सद्द्रव्यस्यावस्थान्तरापत्तिर्जगदिति भवता नाङ्गीकृतं हि । येन जगत्पदवाच्यानां सदवस्थानामनित्यत्वं सतो नित्यत्वं वक्तुं शक्येत । अतो ब्रह्मजगतोश्चिदचिन्मयत्वाविशेषात्कथं ब्रह्म सत्यं जगन्मृषेति । किंच सशक्तिकस्यापि ब्रह्मणस्सृष्टेः पूर्वं मनसोऽभावेन कथं वा सङ्कल्प इति चेत्- कार्येण हि शक्तिरनुमीयते; ततो यदा जगत्सृष्ट्यादिकार्यं चैतन्याद्भवति, तदा चैतन्यं सशक्तिकार्यसहितशक्तिमदिति यावत् । यथाऽग्निः कदाचिच्छुद्धः- दाहाभावात्, कदाचिद्दाहकार्यसहितशक्तिमांश्च । अतश्शक्तिसहितत्वांशे ब्रह्मेश्वरयोरविशेषेऽपि सकार्यनिष्कार्यशक्तिमत्त्वांशे विशेषोऽस्त्येवेति । अत एव ब्रह्मण्यपि शक्तिसद्भावाङ्गीकारात् मायोपहितं चैतन्यं ब्रह्मेत्युक्तम् । निष्कार्यशक्तिमच्चैतन्यं ब्रह्मेति तदर्थः । शक्तिविशिष्टचैतन्यं त्वीश्वरः तच्छक्तेस्सकार्यत्वात् । श्रूयते हि लोकेऽपि महाबलस्याप्युदासीने नास्त्यस्य शक्तिरिति प्रयोगः । अजागलस्तनवन्निष्कार्याऽस्य शक्तिर्निष्फलत्वेन वचनानर्हेति; ब्रह्मणि न सशक्तिकत्वव्यपदेशः । एतेन प्रपञ्चसृष्ट्यादिकार्यकरणसमये ईश्वर इति, औदासीन्यसमये ब्रह्मेति चैकमेव चैतन्यमभि-

धीयत इति सिद्धम् । व्यापकता तु सर्वस्यापि चराचरात्मकस्य जगतः परिपूर्णचैतन्याधिष्ठानत्वेन सर्वत्रापि ब्रह्माभिन्नजीवसूक्ष्मचैतन्यस्य ब्रह्म-चैतन्यस्य च सत्त्वेन बहिरन्तर्व्यापकत्वं ब्रह्मणस्सिद्धमेव । ईश्वरस्यापि ब्रह्मत्वेन रूपेणैव तद्व्यापकत्वमिति । कारणावस्थप्रकृत्यपरपर्यायशक्ति-विशिष्टं चैतन्यमेव कार्यावस्थप्रकृत्यपरपर्यायजगद्विशिष्टं चैतन्यमभवदिति । ईश्वराज्जगतोऽभिन्नत्वेऽपि कारणस्य कार्यव्यापकत्वनियमेन जगद्व्याप-कत्वं सङ्घटत एवेश्वरस्य, यथा मृदो घटव्यापकत्वं, नियमनं तु ईश्व-रत्वेनैव रूपेण कार्यकर्तृत्वकारणत्वाभ्यां जगदीश्वरयोर्भेदात् । शुद्ध-चैतन्यस्य कार्यकारणावस्थावत्त्वकल्पनस्य मिथ्यात्वेन यथा जगन्मिथ्या तथा ईश्वरोऽपि परिपूर्णं शुद्धं चैतन्यमेव सत्यमिति । सङ्कल्पोऽपीश्वरस्य शक्तिकार्यमेव, सङ्कल्पनात्मिका शक्तिरपीश्वरस्यास्तीति यावत् । किंच मनसोऽपि सङ्कल्पविकल्पादयश्शक्तिवशादेव । अतो मायायां सर्व-सम्भवात्, सर्वज्ञत्वसर्वनियन्तृत्वसर्वेश्वरत्वादय ईश्वरे मायया सम्पद्यन्त इति नातीव वितर्कनीयं तत्रेति । नन्वीश्वरस्य ब्रह्मत्वेन रूपेण सर्वत्र स्थितावपीश्वरत्वेन रूपेण कुत्र वर्तते ? इतिचेद्ब्रह्मविष्णुशिवदेहेष्विति विद्धि ।

ननु ब्रह्मादीनां बहूनामीश्वरत्वे सर्वनियन्तृत्वं कथं तन्मध्ये एकस्य घटते ? न ह्यनेकनियन्तारश्श्रूयन्त इति चेत् मायावच्छिन्न-चैतन्यं हीश्वरः । स च मायानिष्ठसत्त्वादिगुणभेदेन ब्रह्मविष्णुशि-वात्मकः । तत्र स्रष्टृत्वेन पालयितृत्वेन संहर्तृत्वेन च त्रयाणामपि जग-न्नियमनमस्त्येवेति न दोष इति ।

ननु यथा ब्रह्म निर्गुणं तथा शक्तिरपीति कथं तस्यास्सगुणत्वम् ? नहि लोकेऽग्न्यादिशक्तिषु-सत्त्वादिगुणा दृश्यन्त इति चेत्, नैवम्—कार्यवशाद्धि गुणानुमानम् । यथाऽयं सत्त्वगुणवान् प्रसन्नवदनत्वादयं रजोगुणवान् बहुविधप्रवृत्तिमत्त्वादयं तमोगुणवानलसत्त्वादिति, तथा सृष्टिस्थितिलयैरशक्त्यां रजस्सत्त्वतमांस्यनुमीयन्त इति ।

नन्विदमतीव चित्रं, यच्चेतने उपलभ्यमानानां सत्त्वादिगुणानां शक्त्यामारोप इति चेन्नैवम्—सत्त्वाद्युपलब्धिधर्मवदुक्तापि बुद्धावेव । सा चाचिदेव; अतो ब्रह्मण उपलभ्यमाना सृष्टिशक्ती रजोगुणात्मिका, विष्णोः पालनशक्तिस्सत्त्वात्मिका, ईश्वरस्य संहरणशक्तिस्तमोगुणात्मिकेति शक्त्या एव तत्तद्गुणवत्त्वं न चैतन्यस्येति । ननु बुद्धेस्सन्तु गुणाः, कथं पुनश्शक्तेरिति चेत्- शक्तेर्गुणाभावे शक्तिकार्यबुद्धेः कथं वा गुणसत्त्वं, अतो गुणात्मिकैव शक्तिस्तत्कार्यं जगच्च । किं च गुणानां न हि स्वरूपं कार्यानुमेयं हि गुणसत्त्वम् । यथा शक्तिः कार्यानुमेया, अतः कार्येण केवलेन केवला शक्तिः कार्यगतविशेषैः शक्तिगतविशेषा गुणाश्चानुमीयन्त इत्यनवद्यम् ।

ननु सर्वशरीरेष्वपि सशक्तिकचैतन्यस्य सत्त्वेऽपि सृष्ट्यादिकार्यकृच्छक्तिसहितचैतन्यस्याभावेन ब्रह्मादय ईश्वरा नार्वाचीना अस्मदादय इत्युक्तं तदस्मच्छरीरव्यापिचैतन्यादपि चेतयितृत्वादिकार्योपलम्भात्कथं वयं नेश्वरा इति चेन्नैवम्—'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रविशन्त्यभिसंविश'न्तीति श्रुत्यां सृष्टिस्थितिलयकार्याणामेवेश्वरासाधारणकारणत्वस्य प्रतिपादितत्वादिति ।

ननु 'अन्नाद्भूतानि जायन्ते जतान्यन्नेन जीवन्ति' इत्यादिभिरन्नादीनामपि तथा स्यादीश्वरत्वम् । अन्नजवीर्यादेव उत्पत्तिदर्शनादपीति चेन्नहि केवलवीर्याद्भूतोत्पत्तिः- वन्ध्यावीर्यादिष्वभावात् । अत ईश्वरसङ्कल्पसहकृतात्तस्मादिति । किंच तत्रापि सा शक्तिरीश्वरस्यैव-- सर्वत्रेश्वरशक्त्योः सद्भावात् ।

अयं भावः—यस्माद्बीजादेः सृष्ट्यादिर्जायते तद्गतचैतन्यमीश्वर एवेति । यस्माद्यदा किमपि कार्यं न भवति तद्गतं चैतन्यं तदा ब्रह्मेति ।

ननु एवं सर्वमपीश्वरात्मकं ब्रह्मात्मकं चेति फलितम् । अथ किमिति सृष्ट्यादय इव सर्वज्ञत्वादयोऽप्यस्मदादिषु नोपलभ्येरन्निति चेच्छरीरतारतम्याद्यथा ब्रह्मसृष्टेरस्मदादिसृष्टेश्च तारतम्यं, तथा बुद्धितारतम्यात्सर्वज्ञत्वकिञ्चिद्ज्ञत्वादिभेद इति । ननु बुद्ध्यवच्छिन्नचैतन्यस्य जीवत्वान्मायावच्छिन्नचैतन्यस्येश्वरत्वाच्च, ईश्वरस्य सर्वज्ञत्वादिविषये किमिति बुदितारतम्यमपेक्षत इतिचेत्, उच्यते—प्रकृतिर्द्विधा- माया चाविद्या चेति । तत्र शुद्धसत्त्वप्रधना माया, मलिनसत्त्वप्रधाना अविद्या; माया ईश्वरबुद्धिः, अविद्या जीवबुद्धिः । ब्रह्मादिशरीरगता माया अस्मदादिशरीरगता अविद्या । अस्मद्बुद्धिवासनास्सर्वा अपि ईश्वरबुद्धौ वर्तन्ते । अस्मद्बुद्धिषु तु तत्तत्प्रत्येकवासना एव । अयं विशेषस्तु सत्त्वविशुद्ध्यविशुद्धिभ्यां सम्प्राप्तः, एतस्या बुद्धिरूपाया मायाया एव अज्ञानमित्यपरपर्यायः । अतोऽशेषबुद्धिवासनावदज्ञानोपाधिक ईश्वर इति विद्यारण्यमुनिभिः प्रोक्तम् । अस्मिन् शास्त्रे तु अविद्याबुद्धिरिति मायेति च व्यवह्रियते, मायायां तु न पुनर्बुद्धिव्यवहारः ।

वस्तुतस्तु सापि बुद्धिरेव, एषा द्विविधापि प्रकृतिः प्रागभाव-रहिता- 'अजा'मितिश्रुतेरेतस्या एव गुणवत्त्वमस्मदादिबुद्धिषु तथाऽनुभवात् । ब्रह्मविष्णुशिवशरीरगतैतन्मायावच्छिन्नचैतन्यमीश्वरः, अस्मदादिशरीरगतैतद्बुद्ध्यवच्छिन्नचैतन्यं पुरुषः । मायोपहितं तु ब्रह्म, बुद्ध्युपहितं त्वात्मा; अयमेव जीवसाक्षी; जीववदेते आत्मानोऽप्यनेके इति ।

ननु माया शक्तिरिति पुरा, बुद्धिरित्यधुना उक्तवतस्तव वचः कथं न व्याहतमिति चेन्नैवम्—बुद्धिरपि शक्तिरेव । ननु माया बुद्धिश्शक्तिः प्रकृतिरज्ञानमित्येतानि पदानि पर्यायानि यदि तर्हि चैतन्यस्यैकत्वाच्छक्तेरेकत्वाच्च कथं जीवेश्वरयोर्भेद इति चेत्- शक्तेरेकत्वेऽपि तद्गतसत्त्वगुणविशुद्ध्यविशुद्धिभ्यां भेद इति ।

अयं भावः—यच्छुद्धसत्त्वात्मिकशक्त्या सर्वज्ञत्वादिगुणकं चैतन्यं, तदीश्वरपदाभिधेयं; तत्रापि सत्ताद्दक्सर्वज्ञत्वादिगुणकं चैतन्यं स्वशुद्धसत्त्वात्मिकशक्तिगतसत्त्वगुणोद्रेकवद्विष्णुशरीरगतं तद्विष्णुरिति शरीरशरीरिणोरभेदेन व्यवह्रियते । यत्पुनस्ताद्दक्छक्तिगतरजोगुणोद्रेकवद्ब्रह्मशरीरगतं तद्ब्रह्मेति । यत्तु ताद्दक्छक्तिगततमोगुणोद्रेकवच्छिवशरीरगतं तच्छिव इति च । यच्च मलिनसत्त्वात्मिकशक्त्या किञ्चिद्ज्ञत्वादिगुणकं तच्चैतन्यमस्मदादिशरीरेषु स्थित्वा जीवपदेन व्यवह्रियमाणं डित्थादिनामभिर्व्यवह्रियत इति ।

ननु किं निमित्तोऽयं शक्त्यास्सत्त्वशुद्ध्यशुद्धिरूपभेद इति चेत्—शरीरनिमित्तक एव दृश्यते हि लोके- वृक्षादिषु तमःप्राधान्यं, पश्वादिषु तु रजःप्राधान्यं, मनुष्यादिषु सत्त्वप्राधान्यं च; ज्ञानाभावेन

विज्ञानाभावेन तदुभयसत्त्वे च शरीरनिमित्तको बुद्धिभेदः। किं चास्म-च्छरीरेष्वपि वातपित्तश्लेष्मभिर्दृश्यते हि तमोरजस्सत्त्वगुणोद्रेकः। ननु ब्रह्मादिशरीरोत्पत्तिर्मायया, मायायाश्शुद्धसत्त्वप्राधान्यरूपमायात्वं ब्रह्मादि-शरीरैरित्यन्योन्याश्रयदोष इति चेत्- गुणसाम्यं प्रकृतिरिति प्रथमतः समानगुणतया, अत एव निष्कार्या ब्रह्मणश्शक्तिः; ततः कालवशा-द्गुणक्षोभो जातः। तत्र सत्त्वगुणोद्रेकेण विष्णुशरीरमुदितं, उदिते च तस्मिन् तत्सत्त्वगुणोद्रेकत्वचैतन्यं प्रविष्टं; ततो रजउद्रेकेण ब्रह्मशरीर-मुदितं, तत्र च रजोगुणोद्रेकत्वचैतन्यं प्रविष्टं; ततस्तमउद्रेकाच्छिव-शरीरं जातं, जाते च तत्र तमोगुणोद्रेकत्वचैतन्यं प्रविष्टम्। ततस्सा प्रकृतिर्गुणसाङ्कर्येण मलिनसत्त्वप्रधाना अविद्या भूत्वाऽस्मदादिशरीरा-ण्यसृजत्। सृष्टे च तत्र तथैवाविद्यापर्यायबुद्ध्यवच्छिन्नचैतन्यं प्रविष्ट-मिति। अत एव 'तत्सृष्ट्वा तदेवानुप्राविश'दिति श्रुतिः, अतः काल-वशात्प्रथमं सत्त्वशुद्ध्यविशुद्धी पश्चाद्देहवशादिति न त्वदुक्तदोषाव-काशः। नन्वेवं द्वैतोत्पत्तेः प्रागपि ब्रह्मप्रकृतिकालानां त्रयाणां सत्त्वा-त्कथमद्वैतमिति चेत्- गुणक्षोभणात्पुरा कालस्याभावात्प्रकृतेर्ब्रह्मातिरिक्त-त्वाभावादस्त्यद्वैतमिति।

ननु गुणक्षोभात्पुरेति पूर्वकालं वदन् कथं कालस्याभावं भवान् वक्तीतिचेत्तर्हि सोऽपि ब्रह्मशक्तिरेव न ततः पृथगिति; न तु तस्या भावो वक्तुं शक्यते- अनादित्वान्नित्यत्वाच्च। ननु प्रकृतिकालाऽविना-भूतत्वे ब्रह्मणः कथं वा निर्गुणत्वादय इति चेत्- प्रकृतिगुणैर्न चैतन्यं विक्रियते, न वा कालेन परिणमते, अतस्तत्कार्याभावान्निर्गुणमेव ब्रह्मेति।

नन्वेवं त्रयाणां देवानामस्तु ईश्वरत्वं, कथमथेतरेषां अश्वत्थ-कुद्दालकादीनामिति चेत्, ईश्वरब्रह्मणोरभेदेन अश्वत्थाद्युपाधिकचैतन्यस्य ब्रह्मत्वादिति विद्धि । ननु तर्हि निर्गुणं ब्रह्म सर्वत्रास्तु, न पुनस्सर्व-ज्ञत्वादिगुणकं चैतन्यं, तत्र शुद्धसत्त्वात्मकबुद्ध्यपरपर्यायमायाशबल्यभा-वात् । अङ्गीकारे तु कथं स्तम्भान्नरसिंहोत्पत्तिरिति चेत्, उच्यते— ईश्वरस्य सर्वात्मकत्वेन सर्वज्ञत्वेन च कर्मवश्यनियतदेहाभावेन स्वपूरु-षेच्छानुगृहीतरूपमिति लीलया देहस्वीकृतिश्रवणात् । सर्वत्राप्यन्त-रात्मतया स्थितं यद्ब्रह्म तत्त्वं तदेव सृष्टेः पूर्वं यथा विष्ण्वादिरूपधारि तद्वत् स्तम्भाद्यन्तरालात् लीलया नरसिंहादिरूपं धृत्वाऽऽविर्भवतीति । ननु केयं लीलेति चेदियमपि तच्छक्तिरेव ।

ननु कथं सर्वस्मात्सर्वदा ईश्वरावताराविर्भावो न स्यादिति चे-त्स्वभक्तेच्छाभावात्, सृष्टेः पुरा कालवशादधुना भक्तेच्छावशाच्च रूप-परिग्रह इति भावः । ननु केवलस्य ब्रह्मणो मामयं चिन्तयतीति ज्ञाना-भावेन कथं स्तम्भादेर्नरसिंहाद्युत्पत्तिरिति चेत्, मैवम्—ईश्वरस्य सर्वा-न्तरात्मतया सर्वज्ञत्वेन च स्तम्भोपाधिकान्मत्तत्त्वभूताद्ब्रह्मणोऽयं मद्भक्तः मदाविर्भावमभिवांछतीति ज्ञात्वा तत्स्तम्भगतो निर्गुणश्चैतन्यरूपस्स्वयमेव शक्त्या तथातथा रूपं धृत्वा भक्तानवतीति ।

ननु यत्सर्वान्तर्गतं न तत्सर्वज्ञत्वादिगुणकं, यत्सगुणं न तत्स-र्वान्तरमितीश्वरस्य कथं सर्वान्तरात्मकत्वमिति चेत्, मैवम्—सगुण-स्यागुणस्य च चैतन्यस्य यदि भेदस्तर्हि स्यादुक्तदोषः ।

वस्तुतस्तु चैतन्यमभिन्नमेव, सगुणत्वनिर्गुणत्वयोस्तु भेदः । यथा

दिगम्बरः कौशेयधारी च एकः पुरुषोऽभिन्नः, दिगम्बराम्बरधरत्वयोस्तु भेदस्तथा । नन्वेकमपि एकमेवेश्वरचैतन्यमगुणत्वेन रूपेण सर्वान्तर्गतं, सगुणत्वेन तु तेषु देवेष्विति लब्धत्वेन कथं स्तम्भे अगुणचैतन्यवति नरसिंहरूपं चैतन्यमितिचेत्, उच्यते—यथा काष्ठे नीरूपोप्यग्निः मथनात्काष्ठं भित्वा उच्छिखो बहिरुद्गच्छति, तथा स्तम्भे अगुणमपि भक्तेच्छातः स्तम्भं भित्वा साकारमुद्गच्छतीति ।

ननु भक्तेच्छाप्रोत्थापितलीलया मायिनस्साकारतास्तु कथं पुनरमायिनो ब्रह्मण इति चेदुच्यते—द्वैतोत्पत्तेः प्राग्यथा सप्रकृतिकमत एव शुद्धं चैतन्यं कालक्षोभितसत्त्वादिगुणमायाशक्तिमद्भूव, तथाऽधुनापि स्तम्भादिगतं सप्रकृतिकं चैतन्यं भक्तेच्छाक्षोभितसत्त्वादिगुणमायाशक्तिमद्भूत्वा ततस्साकारतया बहिरुद्गच्छतीति ।

नन्वेवं युष्माभिरप्युभयविभूतित्वमीश्वरस्योक्तं, यन्नारायणादिरूपधारी वैकुण्ठादिषु स्थित इति च, ब्रह्मत्वेन स्वलीलया सृष्टचराचरे जगति स्थित इति च प्रोक्तत्वेन नित्यविभूतिलीलाविभूतिद्वयमुक्तप्रायमिति । अथ कथमस्मदबुद्ध्युपहितस्यात्मन ईश्वरत्वं तदतिरेकेण चैतन्यस्यानुपलभ्यमानत्वात्, ईश्वरस्य सर्वान्तरात्मत्वश्रवणेनास्मदादिष्वीश्वरस्यावश्यस्थातव्यतानियमादिति चेत्- आत्मन एव ब्रह्माभिन्नत्वेनेश्वरत्वमिति ।

ननु बुद्ध्युपहित एवात्मा बुद्धितादात्म्याध्यासात्किञ्चिद्ज्ञो भवतीति कथं सर्वज्ञत्वादिकमिति चेत्- भक्तिज्ञानयोगादिभिरत्राप्यस्यैव तदाविर्भाव इति । ननु मलिनसत्त्वप्रधानबुद्ध्यवच्छिन्नचैतन्यस्य

योगादिनापि कथमीश्वरत्वमिति चेन्न ब्रह्म, किं तु तादृशबुद्ध्युपहितस्य साक्षिणः केवलात्मनो ब्रह्माभिन्नस्य या प्रकृतिस्सा शक्तिः; बुद्ध्यवच्छिन्नजीवनिष्ठभक्तिज्ञानादिक्षोभितसत्त्वगुणचैतन्यस्य मलिनसत्त्वबुद्धिप्रयुक्तजीवत्वमपाकृत्य तादृशस्वकार्यमायावच्छिन्नेश्वरत्वं भवत इति ।
तद्वत्रापि ब्रह्मण इव केवलात्मनोऽपि शक्तिवशादस्ति जीवत्वमिवेश्वरत्वमिति । एतेनेश्वरस्येव जीवानामपि स्वस्वरूपं ब्रह्मैव; अतो जीवः स्वस्वरूपे केवलात्मनि ब्रह्मत्वविषये घटाकाशे महाकाशत्वविषय इव न विप्रतिपत्तित्वमिति ।

ननु शक्तिव्यतिरेकेण वस्तुनो वस्तुव्यतिरेकेण शक्तेश्चानुपलम्भात् स्वशक्त्या सहाऽऽत्मनः कथं तादात्म्याध्यासः ? अन्यत्रान्यधर्मारोपो ह्यध्यासः, स्वशक्तेस्स्वान्यत्वाभावादिति चेन्नैवम्—कार्यानुमेया शक्तिः, अनुमाता तु पुरुष इति शक्तिपुरुषयोर्भेदावगमात्, शक्तिरपि पुरुषनिष्ठैव, न तु पृथक्सत्ताशालिनीति अस्माभिः पुरुषानन्यत्वेन व्यवहृता । वस्तुतस्तु भिन्नैव, दृश्यते हि लोकेऽप्युभयथा प्रतीतिरहं करोमीति, तत्कार्यं कर्तुं मम न शक्तिरिति च । अतोऽहं करोमीत्यादौ कर्तृत्वादीन् बुद्धिधर्मान् स्वात्मन्यारोप्याऽहमिति स्फुरणरूपत्वं शक्त्यामारोप्य शक्त्या सह तादात्म्याध्यासेनात्मैव जीवत्वेन व्यवह्रियते । अहं केवलस्साक्षी चिन्मय इत्यादौ तु कर्तृत्वाद्यभावेन शक्तिं पृथक्कृत्य आत्मा स्वस्वरूपत्वेन व्यवह्रियत इति स्वशक्त्या सह स्वस्य तादात्म्याध्यासो न विरुध्यत इति बोध्यम् ।

नन्वेवमप्यहं करोमीत्यत्र क्रियाश्रयकेऽशरीरसम्बन्धित्वेन नात्मन इति कथमात्मशक्तित्वं तस्या इति चेदुच्यते—जीवशक्त्यैव शरी-

रस्य तादृशशक्तिमत्त्वं; अन्यथा मृतशरीरमपि गमनादिकं कुर्वीत; अतो जीवशक्तिरेव शरीरं व्याप्य जीववत्स्थित्वा क्रियाः करोतीति ।

ननु किं तच्छरीरं स्वतश्शक्तिहीनम्? अङ्गीकारे तु मृतशरीरे अग्नीन्धनरूपा शक्तिरस्त्येवेतिचेत्, मैवम्—सर्वत्रापि चराचरे जगति यथा ब्रह्म व्याप्य स्थितं तथैव तच्छक्तिरपि सामान्याकारेण वर्तते । किंत्वात्मनि स्वप्रकाशत्वरूपेण ब्रह्मशक्तिः, जीवे चेतयितृत्वरूपेणात्मशक्तिः, शरीरे कर्तृत्वादिरूपेण जीवशक्तिश्च विशेषाकारेण वर्तते । ततश्शरीरगतक्रियाशक्तिर्जीवशक्त्या, न तु पुनश्शरीरशक्त्येत्यनवद्यम् ।

ननु 'स्वाभाविकी ज्ञानबलक्रिया' चेति ज्ञानबलक्रियाशक्तय ईश्वरस्यैव स्वाभाविका इति कथं पुनर्जीवादीनामितिचेत्, उच्यते—परम्परया तत्तच्छक्तीनामपीश्वरशक्तित्वानपयात् । यद्यपि ज्ञानशक्तिर्मनसः, बलशक्तिश्शरीरस्य, क्रियाशक्तिरिन्द्रियाणां च स्वाभाविकी । तथाऽपि तत्तन्निष्ठतत्तच्छक्तिरीश्वरस्यैव- सर्वासामपि चैतन्यापृथक्सिद्धत्वादिति ।

अयं भावः—मनआदिनिष्ठं चैतन्यं यथा ब्रह्म तथा तत्त्वनिष्ठा शक्तिरपि सामान्याकारेण ब्रह्मणः, विशेषाकारेणेश्वरस्य, तत्रापि विशेषाकारेण जीवादीनामिति । अक्रियाजनका ब्रह्मशक्तिः, क्रियाजनका ईश्वरशक्तिः, तत्तत्क्रियाजनका तत्तच्छक्तिरिति ।

ननु एवं सर्वमिदं सक्रियं वस्तु ईश्वरशक्त्यैव सशक्तिकं, सर्वमिदं सचेतनमीश्वरचैतन्येनैव आत्मरूपेण सचेतनं, अक्रियमेदं सर्वं ब्रह्मशक्त्या सशक्तिकं, अचेतनमेदं ब्रह्मचैतन्येन सचैतन्यमिति । ईश्वरब्रह्मणोरभेदेनेश्वरस्य सर्वात्मकत्वसर्वान्तर्यामित्वसर्वशक्तित्वसर्व-

ज्ञत्वसर्वसुलभत्वसर्वचेतयितृत्वसर्वस्रष्टृत्वसर्वरक्षकत्वसर्वसंहर्तृत्वसर्वहेयप्रतिभटानन्तकल्याणगुणाकरत्वप्रमुखगुणवत्त्वमस्मन्मताभिमतं लब्धमेव । मायाविद्याभेदाज्जीवेश्वरयोः स्वातन्त्र्यपारतन्त्र्यसर्वज्ञत्वकिञ्चिद्ज्ञत्वादिप्रयुक्तभेदोऽपि लब्ध एव । केवलात्मनोः जीवान्तर्यामित्वेन तस्यैवेश्वरत्वेन चान्तर्यामिब्राह्मणप्रतिपादितसर्वान्तरात्मत्वस्य सिद्धत्वेन आत्मानं प्रति जीवस्य शरीरत्वेन शरीरशरीरिभावविशिष्टाद्वैतमपि जीवेश्वरयोर्लब्धम् । अथ कथं यत्किंचिद्धर्मापुरस्कृतं साक्षादद्वैतं युष्मन्मते लब्धम् ? अद्वैतं नाम किमु- द्वैताभावः, अथवा अतिरिक्तः कश्चन भावपदार्थः ? आद्येपि किमु द्वैतस्य सत्त्वे निषेधः, उतासत्त्वे यदि द्वैतं सत्तर्हि कथं निषिध्यते ? यद्यसत्तर्हि असत्त्वादेव निषेधाभावः । न द्वितीयः अद्वैतनामकविशेष्यपदार्थाप्रसिद्धेः । विशेषणमद्वैतपदं तु द्वैताभावबोधकमेवेति नाद्वैतसिद्धिरितिचेत्, नैवम्—इदानीं विद्यमानस्य द्वैतस्य प्रलयेऽभावादद्वैतं ब्रह्मेति ।

ननु कोऽयं प्रलयः ? किं नित्यः ? उत नैमित्तिकः ? अहोस्विन्महान् ? यद्वाऽऽत्यन्तिकः ? न नित्येऽद्वैतं वक्तुं शक्यते, तदानीं द्वैतप्रतीत्यभाव एव; न तु द्वैताभावः- सुप्तशरीरप्राणादिसद्भावात्; न नैमित्तिके- चतुर्मुखब्रह्मणो भगवन्नारायणनाभिकमले रात्रौ निद्राणत्वेन द्वैतसद्भावात्; न महाप्रलये- चतुर्मुखादिनिखिलजगत्कुक्षिंभरेर्विश्वम्भरस्य सत्त्वात्; नात्यन्तिके- एकस्य मुक्तत्वेऽपि तदितरसद्भावादिति चेन्न तथा—महाप्रलय एव । तथाहि- ब्रह्मरुद्रेन्द्रादीनां लयानन्तरं विष्णुमूर्तेरपि लये केवलं तमशिष्टं सदप्यपि

पश्चात्, तमः परेदेवैकीभवतीति श्रुत्या ब्रह्मण्येकीभवति, तदपि लीयत इति भावः। तदानीं चैतन्यमद्वैतमेकमेवावतिष्ठत इति ।

नन्वेवं प्रपञ्चावस्थायां न कस्यापि मुक्तिः- स्वस्वरूपानुसन्धानेन ब्रह्मभूतस्यापि द्वैतसद्भावेनाऽद्वितीयब्रह्मप्राप्त्यभावात्; प्रलये तु ज्ञानं विनापि सर्वेषां मुक्तिरिति वृथा ज्ञानं; तत्प्रतिपादिकाश्श्रुतयोऽपि 'तमेवं विदित्वाऽतिमृत्युमे'तीत्यादयो निष्प्रामाणिकाः; वेदान्तशास्त्रमपि व्यर्थं तत्प्रतिपादकं, गुरुरपि तथैवेति, पुनरपि प्रावर्तनाद्वैतविद्यासम्प्रदायोच्छेदप्रसक्त्यापत्तिरिति चेन्नैवम्—प्रपञ्चस्य मायावद्ब्रह्मपृथक्सिद्धत्वेन ब्रह्मणि द्वैतापादकत्वाभावात्सदाऽप्यद्वयमेव ब्रह्म। बन्धमुक्ती तु द्वैतप्रतीत्यप्रतीतिभ्यामेव; अतो महाप्रलये कार्याणां कारणे लयनियमेन सर्वे इमेऽमुक्ता अन्तःकरणोपाधय आत्मानो ब्रह्मप्रकृत्युद्भूतत्वेन तत्रैव लीना वर्तन्त इति न सर्वमुक्त्यादित्वदुक्तदोषाणां प्रसक्तिरिति ।

ननु एवं कारणावस्थचिदचिद्विशिष्टं ब्रह्म महाप्रलयेऽपीति लब्धम्। आत्मभिश्चिद्रूपैर्मिश्रितायाः प्रकृते अचितो ब्रह्मणि सत्त्वात्तदेव प्रपञ्चावस्थायां कार्यावस्थचिदचिद्विशिष्टमभवदिति च लब्धं—आत्मदेहविशिष्टत्वाद्ब्रह्मणः । अतः कारणावस्थचिदचिच्छरीरकस्य ब्रह्मणः कार्यावस्थचिदचिच्छरीरकस्य ब्रह्मणश्चाभेद एवेति सिद्धमस्मद्विशिष्टाद्वैतमतम् । सर्वात्मना द्वैतनिषेधायोगादत्र युष्मन्मत इवाऽस्मन्मतेपि स्वसमानद्वितीयवस्तुरहितमित्यद्वैतीयपदार्थः प्रोक्तः, स्वान्यवस्तुरहितमिति वा- सर्वस्यापि स्वानन्यत्वात् ।

द्वैतं सन्न तु तत्पृथग्द्वयगतावस्था अनित्या न वा
कल्पेऽपि द्वयबाधनं तदमुतो मिथ्यात्वशङ्का न हि ।
सर्वद्वैतशरीरकं तदमलं तत्त्वं तु सर्वात्मकं
ब्रह्मैवाद्वयमङ्ग! तत्पृथगिदं यस्मान्न सद्भासते ॥

तत्तस्माद्ब्रह्मणः पृथक्तु न ।

साक्षित्वं सकलज्ञता च निखिलात्मत्वं समस्तेशता
मुख्या अप्यपि दोषनिर्मलगुणा यत्रेश्वरे स प्रभुः ।
श्रीमानादिकविद्विरेफविलसन्नाभीपयोजो हरि-
स्सेव्योऽज्ञाननिवृत्तयेऽपि भवता स ब्रह्म वै वस्तुतः ॥

ब्रह्मेतीश्वर इत्यखण्डरस इत्यात्मेति मायीति वा
ब्रह्मेत्यच्युत इत्युमापतिरिति स्वाराडिति श्रीरिति ।
भाषेति क्षितिभृत्सुतेति च जना मायेति हा शक्तिरि-
त्यार्ता यं समुपासते स भगवानीशो निषेव्यो हि नः ॥

सत्यज्ञानबलक्रियादिगुणवान् यः पूरुषश्चोत्तमः
पुंसां लोक इव प्रभूतगुणवान् यद्वद्गुरुः कीर्त्यते ।
एतत्साङ्ख्यमतं कथं नु न मतं योगेन यत्राप्ययं
प्रख्यातः पुरुषोत्तमो वयममुं सेवामहेऽपीश्वरम् ॥

भक्तिः पुंसि रतिः पुमान्स भगवान्यः केवलात्माऽस्ति व-
स्तत्साक्षात्कृतिरेव ते किल मते ज्ञानं तदेकं द्वयम् ।

ज्ञानान्मुक्तिरिति श्रुतिर्न विहिता तन्नो मते निर्गुणं
ध्यानं वा सगुणं च मुक्तिजनकं ध्येयस्वरूपैक्यतः ॥

ध्येययोर्ब्रह्मेश्वरयोर्निर्गुणसगुणयोस्स्वरूपस्य सत्यज्ञानानन्दादेरैक्यात् ।

क्षीराम्भोनिधिरङ्गदुन्नततरङ्गव्यूहडोलोत्सवा
नन्दश्रीभृदपाङ्गकेलितरमा मन्मानसाम्भोजगा ।
एवं तत्त्वमगोचरं श्रुतिवधूचित्ताम्बुजस्यापि हा
भक्तेच्छावशतोऽकरोत्प्रकटितं गृह्णन्तु सन्तो मुदा ॥

भगवतोऽमुमहं मोक्षयिष्यामीति सङ्कल्पेन ममेयं तत्त्वप्रवचनशक्तिस्तदीयैवेति भावः ।

इति वेदान्ततत्त्वामृते प्रथमो भागः ।

श्रीहयग्रीवार्पणमस्तु ।





श्रीहयग्रीवाय नमः ।

# वेदान्ततत्त्वामृते

## द्वितीयो भागः

ब्रह्म निर्गुणमथ वा सगुणं वेत्यत्र विचार्यते ।

'साक्षी चेता निर्गुणः केवलोऽयं, निर्गुणं निष्कलं शान्त'-मित्याद्याः श्रुतयः गुणापायविसर्गाभ्यामनुमीयमाने ब्रह्मणि का पुनर्गुण-कल्पना । यदि सगुणं तर्हि नश्येत घटवदित्यादयो युक्तयोऽनुभवश्च ब्रह्मणो निर्गुणत्वे मानमित्यद्वैतिनः ।

विशिष्टाद्वैतिभिः कृतोऽयं पूर्वः पक्षः—

ननु 'सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दं ब्रह्म' इत्यादिश्रुतयः प्राकृतगुणत्रयात्मकजगत्सृष्ट्यादिहेतौ ब्रह्मणि प्राकृतानामत एव हेयानां सत्त्वादीनां तदुत्पन्नकामादीनां च गुणानामप्रसक्तावपि सत्यज्ञानानन्दा-दीनां गुणानां प्रसक्तिरस्त्येव । अन्यथा जगत्सृष्टिहेतुसङ्कल्पात्मक-ज्ञानाभावे प्रतीयमानं जगन्न सृज्येतेत्याद्याः युक्तयोऽनुभवश्च ब्रह्मणः सकलहेयप्रत्यनीककल्याणगुणगणैकतानत्वे प्रमाणम् । अतस्सगुणं ब्रह्मेतिचेत्, मैवम् । सत्यज्ञानानन्दा एव ब्रह्म, नतु ब्रह्मगुणाः ।

ननु आनन्दादीनां गुणत्वे अविवादाद्ब्रह्माऽपि कस्यचिद्गुण-स्स्यात् । अतः कस्यचिच्छेषभूतस्स्यादतस्स शेषी वक्तव्यः । किंच

आत्मा न कस्यचिच्छेषो भवतीत्यादिसिद्धान्तव्याकोपश्च स्यादितिचेत्, मैवम्—आनन्दार्थमेव सर्वैः सर्वे भार्याधनादयो गृह्यन्त इति सर्वेऽप्यानन्दशेषा एव । स न कस्यचिच्छेषः, किंतु शेष्येव । 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इत्यादिश्रुतयोऽपि यतो वा इमानि भूतानि जायन्ते, तद्ब्रह्मेति भूतोदयादिहेतुब्रह्मत्वं आनन्दस्य वदन्ति । आनन्दो नापि गुणः, नापि गुणी, गुणत्वगुणित्वरूपधर्मद्वयान्यतरस्य तत्राभावात् । कालिकैस्तु ब्रह्मानन्दप्रतिबिम्बभूतानन्दस्य सुखापरपर्यायस्य चित्तवृत्तेस्स्रगादिजन्यत्वमात्रेण गुणत्वं कथ्यते ।

वस्तुतस्तु सुखं न केनापि जन्यते, स्रगादयस्तु स्वतस्सिद्धस्य सुखस्योद्बोधका एव । तत्सुखोद्बोध एव चित्तवृत्तिर्जन्यश्चेति गुणभूतः, नतु प्रतिबिम्बसुखमपीति; किमुत बिम्बसुखम् ।

ननु ज्ञानमानन्दश्च किमेकं वस्तु? उत द्विविधम्? नाद्यः—सत्यं ज्ञानमानन्दं ब्रह्मेत्यादिश्रुतिषु ज्ञानानन्दयोरन्यतरोक्तिवैयर्थ्यात् । न द्वितीयः- ब्रह्मण एकत्वेन तत्त्वरूपभूतयोस्तयोरप्यैक्यस्यावश्यम्भाव्यत्वात् । किंच ज्ञानजन्यत्वमप्यस्त्यानन्दे, अन्यथा वेदान्तज्ञानस्य आनन्दहेतुत्वाभावेन तत्त्वज्ञानान्मुक्तिरित्यादयो न सिद्ध्येरन्निति चेत्, मैवम्—ज्ञानानन्दयोर्नाममात्रेणैव भेदः, अतो ज्ञानानन्दब्रह्मादीनि पर्यायपदान्येव । तेन सत्यपदाभिधेयं ज्ञानपदाभिधेयमानन्दपदाभिधेयं ब्रह्मपदाभिधेयं च तद्वस्त्विति सत्यादिश्रुत्यर्थः । नतु पुनर्ज्ञानस्वरूपमानन्दस्वरूपमित्येवंरूपस्तदर्थः । किंचानन्दस्यैव ज्ञानत्वेन न ज्ञानजन्यत्वमानन्दे, तत्त्वज्ञानादित्यत्र तु तत्त्वं ब्रह्म, चैतन्यरूपं ज्ञानम् । तस्य

यद्ज्ञानं वेदनमन्तःकरणवृत्तिरूपं तस्मान्मुक्तिरित्यर्थः । एवंविधान्तः-करणवृत्तिरूपज्ञानजन्यत्वमपि नानन्दे, स्वप्रकाशस्य स्वसिद्धस्यानन्दस्या-जन्यत्वात्; किंतु तमानन्दं तथाविधं ज्ञात्वा पुमान् मुच्यते । नहि हिरण्यनिधिज्ञानेन हिरण्यनिधिर्जन्यते, किंतु स्थित एव निधिर्लभ्यत इति ।

ननु सत्यादिपदाभिधेयस्य ब्रह्मणस्स्वरूपभूतो वा न वा ? नाद्यः-- आनन्दपदाभिधेयं ब्रह्मेति त्वदुक्तत्वेन आनन्द इति पदमेव ब्रह्मणो वाचकमिति । न द्वितीयः- 'आनन्दो ब्रह्मेति व्यजाना'दिति श्रुत्या सर्वलोकविदितानन्दस्यैव ब्रह्मस्वरूपत्वबोधनादितिचेत्, न—कालिकै-रानन्दपदेन यदभिधीयते तदनिर्वाच्यं ब्रह्मैव । तत आनन्दब्रह्मणोः पद-भेद एव, अर्थस्त्वेक एव ।

अयं भावः—आनन्दस्यानिर्वाच्यत्वलक्षणं यदेव स्वरूपं ब्रह्मणस्तदेव, तत आनन्दपदाभिधेयमानन्दस्वरूपं च ब्रह्मेति ।

नन्वेवं ज्ञानस्वरूपं ज्ञानाभिधेयं च ब्रह्मेति लब्धं तर्ह्यन्तःकरण-प्रतिफलितमेकमेव तत्त्वं ज्ञानानन्दादिस्वरूपं तदभिधेयं च; वृत्तिसु-खोभयात्मकत्वेन द्वैधा फलितम् । अयं भावः-- स्रगादिजन्यं प्रति-बिम्बसुखमेकं, अयं घट इत्यादिप्रतिबिम्बज्ञानमन्यदिति अन्तःकर-णोपाधेरेकत्वेऽपि तद्बिम्बतत्त्वस्याप्येकत्वेऽपि कथं सुखवृत्तिरूपपरस्पर-विलक्षणफलद्वयलाभ इति चेन्नैवम्—अन्तःकरणप्रतिबिम्बितं तत्त्व-मनिर्वाच्यकारकसुखरूपं भवति । न हि स्रगादिजन्येऽपि सुखे कश्च-नाकारो दृश्यते । अन्तःकरणवृत्तिप्रतिबिम्बितं तु साकारकं वृत्त्यपर-पर्यायं ज्ञानं भवति । वृत्तेराकारश्चाहं सुखीत्यादिरूपः ।

अयं भावः— ब्रह्मतत्त्वमेकमेव विज्ञानमयकोशात्मके घनीभूतेऽन्तःकरणे प्रतिबिम्ब्याहं सुखीत्यादिवृत्तिरूपं, मनोमयात्मकेऽन्तःकरणे प्रतिबिम्ब्य ममेदमित्यादिवृत्तिरूपं च द्वेधोपलभ्यते; तद्वदानन्दमयकोशात्मके द्रवीभूतेऽन्तःकरणे प्रतिबिम्ब्य सुखरूपं भवतीति। सवृत्ति घनीभूतमिति, निर्वृत्ति द्रवीभूतमिति चान्तःकरणं द्वेधोच्यते। अतस्सवृत्त्यन्तःकरणप्रतिबिम्बितं नामान्तःकरणवृत्तिप्रतिबिम्बितं तत्त्वं वृत्तिज्ञानरूपम्। निर्वृत्त्यन्तःकरणप्रतिबिम्बितं च सुखरूपमिति बिम्बैक्यमक्षतम्। द्रवीभूतं लीनावस्थं निर्वृत्तीति, घनीभूतं सवृत्तीति चान्तःकरणं व्यवह्रियते। अत उपाधिभेदादेव भेदः, न तत्त्वत इति।

ननु भवतु ज्ञानानन्दयोर्ज्ञानित्वानन्दत्वधर्मयोगित्वमस्ति वा, न वा? अस्ति चेत्- तयोर्ब्रह्मत्वेन सधर्मं सगुणं ब्रह्मेति लब्धं, नास्ति चेत्- तस्मिन् तत्त्वाभावे किमन्यस्मिन् तत्त्वं वर्तत इति चेन्मैवमपि— तत्पदवाच्ये ब्रह्मणि तत्त्वपदप्रयोग इव ज्ञानानन्दयोरपि ज्ञानत्वानन्दत्वपदप्रयोगोऽस्तु; अर्थस्त्वेक एव। अन्यथा -'तत्त्वं नारायणः परः, तदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयं ब्र'ह्मेत्यादितत्तत्त्वपदैकार्थबोधकश्रुतिविरोधात्; तत्तत्त्वयोरर्थैक्यानङ्गीकृतौ तु तत्त्वादावपि तत्त्वत्वादि वर्ततेत्यनवस्थापत्तिर्निर्विकल्पकज्ञानासिद्धिश्च।

ननु तर्हि तदादिपदोत्तरश्रूयमाणत्वप्रत्ययः किमर्थक इतिचेदनिर्वचनीयत्वबोधनार्थमित्यवेहि। तथाहि- ज्ञानानन्दादीनां यत्स्वरूपं तदनिर्वाच्यमेव, अनङ्गीकृतौ कीदृक्तद्वद। अतोऽनिर्वाच्ये तस्मिन् को भावो वर्तेत? अनिर्वाच्यत्वरूप एव। ततोऽनिर्वाच्यं ब्रह्मेति निष्कृ-

ष्टत्वेनानिर्वाच्यस्वरूपं ज्ञानानन्दादिकं यथा ब्रह्म तथाऽनिर्वाच्यत्वस्याप्यनिर्वाच्यत्वेनानिर्वाच्यं ज्ञानत्वानन्दत्वादिरूपमनिर्वाच्यत्वमपि ब्रह्मैवेति । तदादीनां तत्त्वादीनां च न भिन्नार्थबोधकत्वमित्यनवद्यम् ।

ननु सत्ये ब्रह्मणि सत्यत्वं वर्तते हि; सत्यत्वं त्वबाधितत्वेन निर्वाच्यमेव । ततस्सत्यादन्यदेव सत्यत्वं धर्मभूतं- यथा रज्जुस्सत्यम् । तस्मादन्यद्रज्जुगतमबाधितत्वलक्षणं सत्यत्वम् । एवं सत्यत्वधर्मवद्ब्रह्मेति ब्रह्मणस्सगुणत्वप्रसक्तिरितिचेत्, मैवम्—अबाधितत्वं नाम कालत्रयाबाध्यमानत्वं हि । अद्वितीये ब्रह्मणि कालस्यैवाभावेन तत्प्रत्युक्ताबाधितत्वं तत्र नास्तीति, सत्यत्वमित्यस्य बाधितत्वधर्माभावः; तद्वत्सत्यं ब्रह्म निर्गुणमेवेति ।

ननु निषेधस्य प्राप्तिपूर्वकत्वेन बाधितत्वस्य प्राप्तिरेव ब्रह्मणि नास्तीति कृत्वा कुतस्तन्निषेध इतिचेत्, मैवम्—यज्जगति प्रसज्यमानं बाधितत्वं तद्ब्रह्मणि भ्रमेण प्रसक्तं सत्प्रमया निषिध्यत इति ।

ननु बाधितत्वं यथा गुणः, तदभावेऽपि तथा न किं गुण इतिचेत्, मैवम्—गुणो नाम धर्मो हि । सच बाधितत्वादिरूपो वा, अथवा तदभावादिरूपः, यद्वोभयात्मकः ? नाद्यः- तदभावस्य धर्मत्वाङ्गीकारेण तस्मिन्धर्मत्वासम्भवात् । न द्वितीयः- बाधितत्वस्य धर्मत्वेनाङ्गीकृतत्वेन तस्य धर्मत्वे तदभावो धर्माभाव एव, नतु धर्मः । यत् तद्भवति तदभावो नहि तद्भवेत् । न तृतीयः- एकस्य विरुद्धद्वयात्मकत्वासम्भवात्, ततस्तत्त्वादिरूप एव धर्मः नतु तत्त्वाभावादिरूप इति बाधितत्वाभावो न गुण इति ।

ननु धर्मो नाम भावः, स च बाधिते बाधितत्वरूपः, अबाधितेऽबाधितत्वरूपश्चेति बाधितत्वाबाधितत्वादिबहुविधाकारक एव; यथा सुप्तिङन्तं पदमिति पदत्वं रामपदेऽरामपदेऽपि वर्तते, तथा बाधितेऽबाधितेऽपि धर्मो वर्तत एव; तस्य धर्मस्याकारस्तु बाधितत्वाबाधितत्वादिरूपेण बहुविध इति चेन्मैवम्—न बाधितमबाधितमिति समासादबाधिते बाधितत्वाभाव एव, न त्वबाधितत्वरूपोऽन्यधर्मः । अतस्तत्त्वस्यैव धर्मत्वं, तत्त्वाभावस्य न धर्मत्वमिति ।

ननु तर्हि सत्यं सत्यत्ववदसत्यं न सत्यमसत्यमिति सत्यत्वाभाववदिति ब्रह्मण एव सत्यत्वरूपगुणवत्त्वेन सगुणत्वं, जगतस्तु सत्यत्वाभाववत्त्वेन निर्गुणत्वं व्यत्यस्तेनापतितमिति चेन्मैवमपि—सत्यपदस्य लक्षणयाऽसत्यत्वाभाववदित्यर्थाश्रयणेनासत्यत्वस्य च बाधितत्वरूपेण हेतुना धर्मत्वेन बाधितत्वरूपधर्माभाववद्ब्रह्मेति फलितम् ।

नन्वबाधितत्वात्मना सत्यत्वस्य धर्मत्वाभावेऽपि सत्यस्य भावः सत्यत्वमिति सत्यत्वात्मना सत्यत्वस्य धर्मत्वमस्त्येवेति चेन्मैवमपि—तादृशसत्यत्वस्य ज्ञानत्वादिवद्ब्रह्मार्थबोधकत्वमेव, न तु भिन्नतद्धर्मार्थबोधकत्वं ब्रह्मणो धर्मप्रसक्त्यभावात् ; अतस्सत्यसत्यत्वज्ञानज्ञानत्वतत्त्वानन्दानन्दत्वादीनि ब्रह्मपर्यायपदान्येवेति ।

ननु भवतु बाधितत्वाभावो यदि न धर्मः तर्हि स किं स्यादिति चेदुच्यते—अभावरूपः कश्चन पदार्थः, नैयायिकाभिमताभावेऽन्तर्भवतीति । ननु भवतु भावपदार्थो धर्मो बाधितत्वादिरूपः तर्हि बाधितत्वाभाववति ब्रह्मणि वर्तमानं तद्बाधितत्वाभाववत्त्वं भावपदार्थत्वेन

धर्म एवेति चेन्नैवमपि—बाधितत्वाभाववत्त्वं च बाधितत्वाभाव एवे- त्यभावपदार्थ एव । बाधितत्वाभाववतो भावपदार्थत्वेन तद्धात्वोऽपि भावपदार्थ एवेत्याग्रहे ज्ञानत्वादिवत्तदपि ब्रह्मैवेति न दोषः- बाधि तत्वाभाववतो ब्रह्मत्वात् ।

ननु तर्हि सत्यादिपदाभिधेयत्वस्य धर्मस्य ब्रह्मणि सम्भवाद्ब्रह्म सविशेषमेवेति चेन्नैवम्—अभिधेयत्वं यत्किञ्चिद्विशेषाप्रयोजकमि- त्यभिधेयत्वधर्मवत्त्वमात्रेण ब्रह्मणो न निर्विशेषत्वव्याहतिरिति ।

नन्वभिधेयत्वस्य पदार्थसामान्यलक्षणेन विशेषाप्रयोजकत्वेऽपि सत्यादिपदाभिधेयत्वस्यासत्यादिपदाभिधेयत्वानां च परस्परं भिन्नत्वेन तदादिपदाभिधेयत्वं विशेषप्रयोजकमेवेति ब्रह्म न निर्विशेषमिति चेत्, नैवम्—अभिधेयत्ववत्त्वमात्रप्रयुक्तं सविशेषत्वं सगुणत्वं वा ब्रह्मणो निर्विशेषत्वं निर्गुणत्वं वा व्याहन्तुं न शक्नुयाताम्- सत्यादिपदानां मिथ्यात्वेन तत्सम्बन्ध्यभिधाया अपि मिथ्यात्वात् तद्विषयत्वमपि ब्रह्मणो मिथ्यैवेति कृत्वा सत्यादिपदसम्बन्ध्यभिधाविषयत्वं मिथ्याभूतं सत्यस्य ब्रह्मणो न किंचिदपि भेदं जनयेदिति ब्रह्म निर्विशेषमेवेति ।

नन्वेवं निर्विशेषं नाम पारमार्थिकविशेषशून्यं परमार्थतस्तु ब्रह्मव्यतिरिक्तस्य भेदहेतोः कस्याप्यभावेन ब्रह्म निर्विशेषं; अभिधेय- त्वादयो व्यावहारिकविशेषा एव- तेषां मिथ्यात्वात् न तत्प्रयुक्तादि- शेषो ब्रह्मण इति लब्धं, तर्हि 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा स'हेति श्रुतेरभिधाविषयं ब्रह्म नैवेति ब्रह्मणोऽभिधाविषयत्वस्य मिथ्यात्वं कथमुक्तमिति चेन्नैवम्—परमार्थतो ब्रह्म नाभिधाविषयं, व्यवहारे त्वभिधाविषयमेवेति ।

ननु एवं ब्रह्मण्युपलभ्यन्ते ये निर्विशेषत्वपदार्थत्ववस्तुत्वाभिधेयत्वादयो धर्माः, ते सर्वेऽपि व्यावहारिका एव न पारमार्थिका इति लब्धम् । तर्हि सर्वज्ञत्वादिगुणकमीश्वरनामकं चैतन्यं यथा व्यावहारिकं, तथा निर्विशेषत्वादिगुणकं ब्रह्मनामकं चैतन्यमपि व्यावहारिकमेवेति कथं ब्रह्मणः पारमार्थ्यमीश्वरस्यापारमार्थ्यं चेतिचेन्निर्विशेषत्वस्य विशेषाभावरूपत्वान्न धर्मत्वं; ततो निर्विशेषं ब्रह्म पारमार्थिकमेव । तादृग्ब्रह्मणः सत्यादिपदाभिधेयत्वादयो धर्माः परमार्थे न सन्ति, तदानीं सत्यादिपदानामेवाभावात् । अतो व्यावहारिकदशायां सत्यादिपदैरभिधीयमानं यत्तद्ब्रह्म परमार्थतो निर्विशेषमिति, निर्विशेषचिन्मात्रं ब्रह्म सत्यमेवेति ।

नन्वेवं सर्वज्ञत्वादिगुणकचैतन्यवत्सत्यादिपदाभिधेयत्वादिगुणकं चैतन्यमप्यपारमार्थिकमेव । चैतन्यनिष्ठसर्वज्ञत्वादिगुणानामिवाभिधेयत्वादिधर्माणामपि व्यावहारिकत्वात् । तर्हि सर्वज्ञादिपदैरभिधीयमानमीश्वरचैतन्यं यथाऽपारमार्थिकं तथा सत्यादिपदैरभिधीयमानं निर्विशेषब्रह्मचैतन्यमप्यपारमार्थिकमेवेतिचेत्, मैवम्—सर्वज्ञादिपदैर्यदभिधीयते तत्सर्वज्ञत्वादिगुणकं चैतन्यमेवेति सगुणस्य तस्यापारमार्थ्यमसत्यादिपदैर्यदभिधीयते तन्निर्विशेषं चैतन्यमिति, निर्गुणस्य तस्य पारमार्थ्यं चेति ।

ननु सत्यादिपदैर्यदभिधीयते तन्निर्विशेषमिति वदतस्तव वचः कथं न व्याहतम्? सत्यादिपदाभिधेयत्वरूपविशेषस्य तत्र सत्त्वादितिचेन्नैवमपि—व्यावहारिकं सत्यादिपदाभिधेयत्वं तु केवलं पारमार्थिके

ब्रह्मणि न कश्चिद्विशेषं जनयेदिति । परमार्थतो निर्विशेषं ब्रह्म व्यवहारे सत्यादिपदैरभिधीयत इति च मद्वचोव्याहृतिः । सर्वज्ञादिपदैरभिधीयमाने ईश्वरे तु न केवलमभिधेयत्वमेकमस्ति, किंतु सर्वज्ञत्वादिकमपीति । व्यावहारिकाभिधेयत्वेतरधर्मरहितस्य ब्रह्मणः पारमार्थ्यं, व्यावहारिकाभिधेयत्वसर्वज्ञत्वादिगुणवत ईश्वरस्यापारमार्थ्यं चेति ।

ननु परमार्थतो निर्विशेषे ब्रह्मणि व्यावहारिकमभिधेयत्वं न विशेषं जनयति; सर्वज्ञत्वादिकं तु विशेषं जनयतीति; सर्वज्ञत्वादिव्यावहारिकधर्मवतो ब्रह्मणः पारमार्थ्यं, अभिधेयत्वरूपव्यावहारिकधर्मवतो ब्रह्मणः पारमार्थ्यं चेति त्वया एतावता व्यावहारिकस्यापि ब्रह्मणः पारमार्थ्यमुक्तप्रायम् । तथा च पारमार्थिकब्रह्म व्यावहारिकब्रह्म व्यावहारिकेश्वरश्वरो व्यावहारिकजीवश्चेति चैतन्यं चतुर्विधमिति फलितं; तर्हि व्यावहारिकब्रह्मणः कथं पारमार्थ्यम् ? व्यवहारस्यापरमार्थत्वादिति चेदुच्यते—व्यवहारदशायामपि यत्सत्यादिपदैरभिधेयते तत्परमार्थदशावस्थितब्रह्मस्वरूपमेवेति सत्यादिपदव्यवहारस्यापरमार्थत्वेऽपि तदभिहितस्य परमार्थत्वमेवेति व्यावहारिकब्रह्म व्यवहारदशायां सत्यादिपदैरभिधीयमानं ब्रह्म परमार्थभूतमेवेति ।

ननु तर्ह्यभिधेयत्वादिगुणकमेव ब्रह्मापीतिचेत्- व्यवहारदशायामस्माकं तदिष्टमेव । ननु परमार्थदशायामपि निर्विशेषं ब्रह्मेति किं ब्रह्मणा ज्ञातमुतान्येन ? न ब्रह्मणा- अन्तःकरणवृत्तिरूपं निर्विशेषोऽहमिति ज्ञानं कथं ब्रह्मण उदेष्यति ब्रह्मणस्तदा निरुपाधिकत्वात्; यदि यथाकथंचिदुदेष्यतीति दुरभिनिवेशस्तर्हि तेनैव ज्ञानेन तस्य सविशेषत्वं, नान्येन- तदानीमन्यस्याभावात्, यदि सद्भावस्तर्हि तेनैव तस्य

सविशेषत्वमपीति कदापि न निर्विशेषं ब्रह्मेति चेन्मैवम्—ब्रह्माकार-परिणतेन अत एव ब्रह्मणि निलीय स्थितेन ब्रह्माभिन्नेन मनसैव तदानी-मनुभूतं निर्विशेषं ब्रह्म । निर्विशेषमिति ज्ञानस्य तदानीमनुत्पन्नत्वेन ज्ञानेन तेन वा ब्रह्मणि निलीय तदभिन्नतया स्थितेन मनसा वा न ब्रह्मणो विशेषवत्त्वमिति । ब्रह्मणि निलीने सति मनसि तदानीं ज्ञानाभावे मनसाऽनुभूतमित्यत्र किं मानमिति चेदुच्यते—स्वापे ब्रह्मणि निलीय स्थितेन मनसाऽनुभूतस्स्वापानन्दो यथा उत्थितस्य सुखमहमस्वाप्समिति स्मरणेनानुमीयते, तथा समाध्युत्थितस्य निर्विशेषं ब्रह्माहमन्वभूवमिति स्मृत्या परमार्थदशायां निर्विशेषब्रह्मानुभवो मनसोऽ-नुमीयत इति ।

ननु समाध्युत्थितस्य पुंसोऽनुभूतवस्तुस्मृतिरस्ति, स्वापोत्थि-तस्य तु सा नास्तीति कथं स्वापसादृश्यं समाधेरिति चेन्मैवम्—ब्रह्मानुभवावरकाऽविद्या स्वापेऽस्ति; समाधौ तु नास्तीतीयानेव स्वापसमाध्योर्भेदः । किं च स्वापे मनोऽविद्यायां लीयते, सा ब्रह्मणि लीयते । समाधौ तु साक्षाद्ब्रह्मण्येव लीयते ।

ननु निर्विशेषब्रह्माहमन्वभूवमिति समाध्युत्थितस्मृत्याऽनुभवितुः मनसोऽनुभूयमानस्य ब्रह्मणोऽनुभवस्य च सत्त्वेन त्रिपुटी वर्तत एवेति कथं समाधौ निर्विशेषत्वं ब्रह्मण इति चेन्मैवम्—ब्रह्मण एवानुभव-रूपत्वेनानुभवस्य ज्ञानत्वाद्ब्रह्मणो ज्ञानस्वरूपत्वादनुभावानुभूतयोर्न भेद इति समाधावनुभवित्रनुभवयुगलमेवास्ति । अथापि न निर्विशेषत्व-हानिः- अनुभवितुरनुभवे निलीय स्थितत्वात् । अन्यथा कथं समाधा-

वनुभविता न पृथक्प्रतीयेत । नन्वेवमपि समाधावपि येन केनचिद्रूपेण द्वयवत्त्वमङ्गीकृतमथ का पुनः परमार्थदशा यस्यामद्वैतं ब्रह्म केवलमनुभूयत इति चेत्- मुक्तिरेव ।

ननु तत्र निर्विशेषं ब्रह्मेति को वा वेद ? श्रुतियुक्तिभ्यां विद्वांसस्सर्वेऽपि । का पुनरत्र युक्तिः ? उच्यते—समाधौ हि मनोव्यतिरिक्तविशेषरहितं ब्रह्मानुभूतं- तदानीं मनसो लीनावस्थतया तत्र स्थितत्वात् । उपाधिभूतस्य मनसो लय एव हि मोक्षः । अतो मुक्तौ मनोऽपि न वर्तेत, तर्हि ब्रह्म निर्विशेषमेवेति ।

ननु निष्कलं निष्क्रियं शान्तमिति परमार्थेऽपि ब्रह्मणः शान्तत्वविशेषवत्त्वेन न निर्विशेषत्वमिति चेन्नैवम्—निर्विशेषत्वमेव शान्तत्वं, विक्षेपादिविशेषरहितं हि शान्तमित्युच्यते । ननु तर्हि ब्रह्मणि शान्तत्वरूपधर्मसद्भावेन न निर्गुणत्वं ब्रह्मणीति चेन्नैवम्—शान्तपदस्य ब्रह्मपर्यायत्वमङ्गीकृत्य शान्तत्वमपि सत्यत्वादिवत्समाधेयमिति ।

ननु भवदुक्तरीत्या शान्तत्वस्य ब्रह्मत्वेऽपि शान्ते ब्रह्मणि शान्तिर्गुणोऽस्त्येवेति न नैर्गुण्यं ब्रह्मणः, शान्तं नाम शान्तिमद्धीति चेन्नैवम्—शान्तिर्नाम विक्षेपादिविशेषाभाव इति शान्तेरभावरूपत्वेन न गुणत्वमिति । ननु विक्षेपो नाम शान्त्यभाव इति विक्षेपादेरप्यभावरूपत्वेन न गुणत्वमिति न कश्चिदपि भावरूपो धर्म उपलभ्येतेति चेत्- इष्टापत्तिरेव । ननु सर्वमपि तथात्वे निर्गुणमेव, ओम् ।

ननु यथा जगच्छान्त्यभावादिमन्निर्गुणं, तथा ब्रह्म विक्षेपाभावादिमन्निर्गुणं; यथा च जगद्विक्षेपादिमत्त्वेन सगुणं, तथा ब्रह्मापि

शान्तिमत्त्वेन सगुणमिति ब्रह्मणो न नैर्गुण्यमेव केवलं; किं तु सगु-णत्वमपीति । किं चाभावस्याप्यभावरूपत्वं न नियतं- अभावाभावस्य भावत्वात् । अतस्तत्त्ववत्तत्त्वाभावोऽपि धर्म एव । अन्यथा लोके धर्मत्ववद्वस्त्वेव नोपलभ्येत- सर्वत्रापि यत्किञ्चिदभावस्य विद्यमानत्वात्; तस्मान्न निर्गुणं ब्रह्मेति चेत्, मैवं मंस्थाः—तदभावाभावस्तदेवेति नायमभावोऽभावपदार्थः, किं तु भावपदार्थ एव; ततस्तस्य भावरूपत्व-मुचितमेव । तदभाव एवाभावपदार्थः; अतोऽभावस्य न धर्मत्वम् । शान्त्यभावो विक्षेप इति यदुक्तं तन्न सम्यक्- को वा विक्षेप इत्युक्ते देहद्वयाध्यास इति वक्तव्यत्वात् । अन्यथा विक्षेपश्शान्त्यभावः, शान्ति-र्विक्षेपाभाव इत्यन्योन्याश्रयत्वेन तत्पदार्थद्वयज्ञानमेव नोदीयात् । तस्माद्विक्षेपादीनां गुणत्वमेव, शान्त्यादीनां न गुणत्वमेवेत्यङ्गीकर्तव्यम् ।

ननु स्वस्वरूपेणावस्थितिश्शान्तिः, तदभाव एव विक्षेप इत्येव वक्तव्यम् । तथाहि त्वदुक्तरीत्या विक्षेपो नाम देहद्वयाध्यासः, स कस्माद्भवति ? स्वस्वरूपेणात्मनोऽवस्थानाभावादिति स्वस्वरूपावस्थि-त्यभाव एव विक्षेप इत्यर्थात्फलितत्वात्; अतो ब्रह्मणस्स्वस्वरूपेणाव-स्थानमपि गुण एवेति चेन्मैवम्—शान्त्यभावस्य विक्षेपजन्यत्वान्न विक्षेपत्वमिति ।

ननु शान्त्यभावो विक्षेपजन्यः, विक्षेपाभावो हि शान्तिजन्य इत्यन्योन्याश्रयः । स तथाऽऽस्ताम् । प्रकृते शान्तिविक्षेपयोर्मध्ये कः पदार्थो भावरूपः ? कश्चाभावरूपः ? पक्षे नोभयं भावरूपं, पक्षे तूभय-मप्यभावरूपमेवेति चेत्, न—विक्षेपस्याविद्याजन्यत्वादविद्याया अना-दित्वाच्च ।

ननु स्वस्वरूपेणावस्थिते वा उतानवस्थिते वा ब्रह्मण्यविद्या वर्तते ? नाद्यः- स्वनिष्ठाविद्याकार्यविक्षेपवतः स्वस्वरूपावस्थित्यसम्भवात् । न द्वितीयः- शान्त्यभाववद्ब्रह्मनिष्ठाविद्याकार्यं विक्षेपः, विक्षेपाभाववद्ब्रह्म शान्तिमदित्यन्योन्याश्रयः । तेन च विक्षेपाभाववद्ब्रह्म शान्तं वा शान्त्यभाववद्ब्रह्म विक्षिप्तं वेति; पुनरपि विक्षेपाभावाच्छान्तिः, शान्त्यभावाद्विक्षेप इति शान्तिविक्षेपयोर्भावत्वमभावत्वं च सम्प्राप्तमिति चेन्नैवम्—अविद्याकार्यविक्षेपादीनां प्रसक्तिर्ब्रह्मणि न प्रमा, किं तु भ्रम एवेति ब्रह्म न कदापि विक्षिप्तं, किंतु शान्तमेवेति ब्रह्मनिष्ठायाः शान्तेरभाव एव नोपलभ्येत; अतश्शान्त्यभावस्यैवासिद्धत्वाच्छान्त्यभावो न विक्षेप इति ।

ननु निषेधस्य प्राप्तिपूर्वकत्वाद्ब्रह्मणो विक्षेपप्राप्तिरेव नास्तीति कृत्वा विक्षेपाभावोऽप्यसिद्ध एवेति चेत्, न—भ्रमेण प्राप्तस्य विक्षेपस्य ज्ञानेन निषिध्यमानत्वात् । ननु विक्षेपो यथा भ्रमः, ब्रह्मनिष्ठशान्तेरभावोऽपि तथा भ्रम एवेति शान्त्यभावस्सिध्यत्येव । स एव विक्षेप इति चेत्तर्हि विक्षेपाभावश्शान्तिर्वा शान्त्यभावो विक्षेपो वेति विनिगमनाविरहेणैकत्र शान्तौ वा विक्षेपे वा इतराभावरूपत्वमवश्यमङ्गीकर्तव्यम् । अन्यथा बीजांकुरवदन्योन्याश्रयात् । तेन सर्वजगत्प्रसिद्धत्वेन विक्षेपस्य तदभाव एव शान्तिरिति वाच्यं; अभावेऽपि यदि गुणत्वमिष्यते तर्हि गुणाभावोऽपि गुणस्स्यात्, नैतन्न्याय्यमिति ।

ननु शमदमादीनां गुणत्वेन सर्वशास्त्रप्रसिद्धत्वाच्छमाभाव एव विक्षेपस्स्यात्; नापि प्रसिद्धत्वमेकत्र विनिगमकम् । किं च सर्व-

गुणाभावोऽसिद्ध एव; यत्किञ्चिद्गुणाभावो यत्किञ्चिद्गुणवति दृश्यत एवेति कामादिगुणाभावे शान्त्यादिगुणत्वं न्याय्यमेवेति चेन्मैवम्—अन्तरिन्द्रियनिग्रहश्शम इत्युक्तलक्षणायाश्शान्तेर्गुणत्वेऽपि ब्रह्मनिष्ठायाः शान्तेर्न गुणत्वम् । ब्रह्मणोऽन्तरिन्द्रियमेव नास्तीति कुतस्तन्निग्रहः ? अतस्स शमो भावपदार्थत्वेन गुण एव; एषा तु न गुण इति ।

नन्वेषा ब्रह्मनिष्ठा शान्तिः किं रूपेति चेद्विक्षेपाभावरूपा । ननु शमोऽपि तथैवान्तरिन्द्रियस्य विक्षिप्तस्य निग्रहो विक्षेपाभाव एवेति चेत् , न—अन्तरिन्द्रियं विक्षिप्यमाणं स्ववशीकृत्य स्वाभीष्टं स्मरति, इत्युपलभ्यमानो धर्मश्शमः । अन्तरिन्द्रिये विलीने सति स्वप्रकाशे ब्रह्मण्युपलभ्यते या निर्विकारता सा शान्तिरिति । ननु यथाकथमपि निर्विकारतैव शमशान्त्योर्लक्षणमिति न भेदस्तयोरिति चेत् मनोधर्मः शमः प्राकृतः, ब्रह्मशान्तिस्त्वप्राकृतेति । ननु भवत्वप्राकृता वा प्राकृता वा, न मया तद्विशेषः पृच्छ्यते; किं तु निर्विकारतालक्षणा सा शान्तिः शम इव गुणो वा न वेति चेत्- गुण एव ।

ननु तर्हि विकाराभावलक्षणश्शमो यथा गुणः, तथा क्रियाद्यभावोऽपि गुण एवेत्यभावेऽपि गुणत्वं वर्तत इति न ब्रह्म निर्गुणमिति चेन्मैवम्—शममपि गुणत्वेन न वयमङ्गीकुर्मः- अभावरूपत्वात् ।

ननु शमादयो ये ये गुणत्वेन प्रसिद्धास्ते युष्माकं मते न गुणा ये च पुनः कामादयो दोषत्वेन प्रसिद्धाः ते तु गुणा भवतु त्वन्मत्यनुसारेणाभावस्यागुणत्वम् । ब्रह्मणि विकाराभावः क्रियाभावो मलाभाव इत्यादयोऽभावा बहवस्सन्तीति, तैरभावैस्तस्य सविशेषत्वं

कुतो न स्यादिति चेदुच्यते—भावे वस्तुनि भावा एव विशेषं कल्पयेयुर्नाभावा इति ।

ननु 'एकमेवाद्वितीयं ब्र'ह्मेतिश्रुत्या ब्रह्मणि विजातीयविशेषश्च निवारितो हि; तेन भावपदार्थस्य विजातीयोऽभावपदार्थ एवेति ब्रह्मणि कथमभावसद्भावः ? कथं वा तैरभावैर्ब्रह्मणो निर्विशेषत्वाव्याहतिरिति चेन्नैवम्—सच्चिदानन्दलक्षणस्य भावस्यानृतजडदुःखात्मकं जगदेव विजातीयभावपदार्थः; तत्प्रयुक्तो विशेषो न ब्रह्मणीति; यथा वृक्षजातीयस्य भावस्य शिलाजातीयाद्भावाद्भेदो विजातीयस्तथेति । ननु वृक्षत्वधर्माच्छिलात्वधर्मो विजातिरिति; तत्र विजातीयभेद इष्टः; अत्र तु ब्रह्मणि न कोऽपि धर्म इति को वा धर्मोऽस्य विजातीयस्स्यादिति चेत्—धर्मरहितस्य ब्रह्मणो भावस्य धर्मसहितः प्रपञ्चो भाव एव विजातीय इत्यस्मन्मतसिद्धान्त इति । ननु ब्रह्मणः के सजातीया इति चेज्जीवाः ।

ननु समाना जातिर्धर्मो येषां ते सजातीया इति व्युत्पत्त्या ब्रह्मसमानधर्मत्वं जीवानां वक्तव्यं, किं तदिति चेत्—सच्चिदानन्दत्वलक्षणम् । ननु सच्चिदानन्दानां धर्मत्वमेव त्वयेतःपूर्वं नाङ्गीकृतं हीति चेत्तथैव—तथापि तेषु धर्मत्वमारोपितमस्माभिरेतादृशव्यवहाराय ।

ननु सच्चिदानन्दानां ब्रह्मपर्यायपदत्वेन ब्रह्मण एकत्वेन च तेषु धर्मत्वमितिवचनमेवानुपपन्नं भवतु, एकमित्येकत्वधर्मो ब्रह्मण्युपलभ्यत इति चेत्, न—एकत्वस्य द्वित्वाद्यभावरूपत्वेन गुणत्वाभावात् ।

नन्वेतेऽभावा ब्रह्मणि कथं सन्तीति चेत्, उच्यते—ब्रह्म-

निष्ठा या मायाशक्तिस्साऽभावरूपैवेति । ननु सत्त्वासत्त्वाभ्यामनिर्वच-नीयाहि माया; अतस्तस्याः कथमभावरूपत्वमिति चेत्—अभावोऽपि तादृश एव, ब्रह्मणि क्रियाद्यभावोऽस्तीति श्रूयमाणस्यास्तित्वस्याभाव इति नास्तित्वस्य चाभावे वर्तमानत्वेन न सन् नाप्यसन्न भावपदार्थ इति । ननु सा शक्तिः त्रिगुणात्मिकैवेत्यभावरूपायाश्शक्तेर्गुणमयत्वे-नाभावस्यापि गुणत्वं वर्तत एवेति चेदस्तु—भवदनुग्रहेण ये येऽभावा भावा वा धर्मा ब्रह्मण्युपलभ्यन्ते ते सर्वेऽपि ब्रह्मशक्तिधर्मा एव, न ब्रह्मण इति ब्रह्म निर्गुणमेवेति ।

ननु सत्त्वरजस्तमसां शक्तिगुणत्वमस्तु कुतस्तदभावस्येति चेत्—ब्रह्मनिष्ठा सा शक्तिः प्रकृतिर्मायान्तःकरणभेदाद्विधाभूताऽऽत्मनिष्ठा मनश्शब्दाभिधेया ब्रह्मनिष्ठा मायाशब्दाभिधेया च भवति । अतो यथा मनो निर्वृत्ति सत्त्वाद्यभाववत्, तथा मायापि निष्कार्या सती सत्त्वाद्यभाववत्येवेति; मनसीव मायायामपि सत्त्वादिगुणसत्त्वं तदभावश्च वर्तत एवेति ।

ननु गुणसाम्यं प्रकृतिरिति प्रकृतेर्गुणाभावे प्रकृतित्वमेव नास्तीति चेत्, न—गुणसाम्यं नाम गुणाभाव एव; गुणानां सत्त्वे परस्परात्यन्तविलक्षणानां तेषां कथं वा समता स्यात्। ननु स गुणत्वव-न्निर्गुणत्वस्यापि शक्तिधर्मत्वे ब्रह्मणः किं वा लक्षणमिति चेत्—सच्चि-दानन्दरूपत्वमेव ।

ननु 'सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः' इत्यादिभि-र्निर्गुणत्वं ब्रह्मण एवोक्तं न प्रकृतेरिति चेदुच्यते—शक्तिगुणान् ब्रह्म-

ण्यारोप्य यथा ब्रह्म सगुणमिति वदन्ति, तथा तस्या एव गुणाभावमपि तस्मिन्नारोप्य निर्गुणं ब्रह्मेति वदन्तीति । युक्तं चैतत् अग्निर्दहति न दहतीत्यादौ यथाऽग्निशक्तेः कार्यं दाहात्मकं मणिमन्त्रादिस्तम्भितानिशक्तेः कार्यं दाहाभावादिकं चाग्नावारोप्य व्यवह्रियते, तथा दाहाभावस्त्वग्निकार्यमिति न वक्तव्यम् । दहेत्यादिप्रसक्तिरेव नास्तीति कुतस्तदभावः ? किं चाग्निशक्तिर्दहति, अग्निर्न दहतीत्यपि सम्भविष्यति; अतस्सकार्यशक्तिमद्ब्रह्म सगुणं, निष्कार्यशक्तिमद्ब्रह्म निर्गुणमिति च व्यवह्रियते । ननु सगुणत्वं प्रकृतेर्निर्गुणत्वं ब्रह्मणश्च श्रुतयो बोधयन्तीति चेत्, तासामयं भावः—शक्तेः कार्यगम्यत्वेन सकार्या शक्तिस्सार्थिका, निष्कार्या तु निरर्थकेति मनसि कृत्वा निष्कार्यां शक्तिं शक्तित्वेन व्यवहर्तुं लज्जित्वा कार्याभावगम्यशक्तिनैर्गुण्यं ब्रह्मण्यारोपयन्तीति ।

ननु कार्यगम्यत्वमेव शक्तेर्निरस्तत्त्वा कार्यगम्याऽस्य शक्तिर्मायाग्निशक्तिवदित्युक्तत्वादिति चेत्, अस्तु—तथापि कार्यगम्या सगुणा शक्तिः, तदभावगम्या निर्गुणा शक्तिरिति सामान्यतो विद्यारण्यमुनिभिरुक्तार्थे विशेषो बोध्यः ।

ननु तर्हि शक्त्यतिरिक्तं ब्रह्मैव मास्तु; तथाहि सच्चिदानन्दानां यत्स्वरूपमनिर्वाच्यत्वलक्षणं तदेव शक्तेरपि- शक्तिस्वरूपस्यानिर्वचनीयत्वात ; तेन शक्तेस्सच्चिदानन्दरूपत्वमविप्रतिपन्नम् । 'निर्गुणं निष्कलं शान्त'मित्यादिकं तु त्वया शक्तावेव सिद्धान्तितम् । अग्न्यादिनिष्ठसर्वशक्तीनामप्याब्रह्मस्तम्बपर्यन्तदेहस्थितसर्वात्मनामैकात्म्य-

न्निवेकशक्तित्वं स्वतस्सिद्धम् । अतस्सजातीयशक्तिभ्यो न भेदः, यथा ब्रह्मण आत्मभ्यः । किंच ते मते ब्रह्मणो जातिरेव नास्तीति सजातीयभेदप्रसक्तिरेव नास्ति कुतस्तन्निषेधः ? अत्र तु शक्तेर्गुणाभाव रूपजातेस्सत्त्वेन तत्प्रसक्तिरस्ति, तादृशवस्त्वन्तराभावान्निबध्यते च न विजातीयाज्जगतो ब्रह्मण इव शक्तेरपि भेदः- जगतोऽसत्यत्वात् । नापि स्वगतभेदः- स्वनिष्ठगुणानामेवोपचयापचयौ, न स्वस्येति; यथा ब्रह्मनिष्ठशक्त्या उपचयापचयौ न ब्रह्मणः, तथा तस्मादेकमेवाद्वितीयमिति श्रुतिरत्र पर्यवसन्ना । 'यतो वा इमानि भूतानि जायन्त' इति तटस्थलक्षणं; जगज्जन्मादिहेतुत्वमप्यस्या एव; अन्तर्बहिर्व्याप्य स्थिता चेयमेव । शक्तेस्सर्वत्रानुस्यूतत्वात्सर्वात्मकत्वमप्यस्यामेव सिद्धम् । सर्वस्य गुणमयत्वाज्जीवत्वमीश्वरत्वं चास्या एवाविवादं- तयोस्सगुणत्वात् । निर्दुष्टसत्त्वगुणवती ईश्वरः, मिश्रसत्त्ववती जीवश्चेति, वस्तुतो रूपरहिता गुणतश्शरीरधारिणी चेयमेव । अन्तर्यमयतीति शक्तेरेवान्तर्नियमनं- नियमनस्य शक्तिकार्यत्वात् । सर्वाधारापीयमेव-प्राणनादिशक्तेरेव देहधारकत्वात् । स्वनिष्ठसत्त्वादिगुणभेदाद्ब्रह्मविष्णुशिवात्मिका चेयमेव; नादिरस्याः, न चान्तः, सृष्टेः प्राक् निर्गुणा इयमेव वर्तते । सृष्टावपि सगुणा इयमेव; लयेऽपि निर्गुणा इयमेव । एतदतिरिक्तं वस्तु न किञ्चिदपि नित्यम् । सवृत्तिमनोरूपा सत्त्वादिगुणवतीयमेव जीवः; निर्वृत्तिमनोरूपा गुणाभाववतीयमेवात्मा जीवसाक्षी ब्रह्मभिन्नः; इयमेव स्वप्रकाशा- स्वप्रकाशत्वरूपधर्मस्य शक्तिधर्मत्वात् । दीपनिष्ठशक्तिधर्मो यथा स्वपरप्रकाशत्वं, तस्मान्निर्गुणा शक्तिरेव ब्रह्मेति, सगुणा जीवेश्वरजगन्तीति चोच्यत इति शक्त्यैव सर्वेष्टसिद्धौ

ब्रह्मपदार्थाङ्गीकारो निरर्थक इति चेन्नैवम्—दाहकत्वशक्तिर्यथा वह्नि-रूपवस्तुव्यतिरेकेण नोपलभ्यते, तथा जगज्जननादिशक्तिरपि किञ्चि-द्वस्तुव्यतिरेकेण नोपलभ्यत इत्यनुमानेन तादृशशक्त्याश्रयब्रह्मवस्तु-सिद्धिरिति ।

नन्वेवं शक्त्यास्सत्त्वादिगुणवत्त्वपूर्वकदाहादिकार्यवत्त्वं सत्त्वादि-गुणकार्यवह्न्यादिवस्तुव्यतिरेकेण नोपलभ्यताम् । तथा च शक्त्या रजआदिगुणवत्त्वपूर्वकजगज्जननादिकार्यवत्त्वं रजआदिकार्ये हिरण्य-गर्भादिवस्तुव्यतिरेकेण नोपलभ्यत एव । तेन शक्तेः कार्यं तद्धेतु-गुणवत्त्वं च तद्गुणकार्यवस्त्वधीनमेव, न तु पुनश्शक्तिर्वस्त्वधीना । अतस्सा स्वप्रकाशत्वादिधर्मयुक्ता सत्त्वादिधर्मरहिताऽनिर्वाच्याकारा शक्तिस्सृष्टेः पुरा निष्कार्या निर्गुणेति न तस्या यत्किञ्चिद्वस्तुव्यति-रेकेणासत्त्वं वक्तुं शक्यते । दाहकत्वादिविशेषाकारा शक्तिर्जीवत्वादि-विशेषाकारं ब्रह्मेव वह्न्यादिदेहव्यतिरेकेण नोपलभ्यताम् । अनि-र्वाच्यसर्वत्रानुगतशक्तित्वसामान्याकारा शक्तिः चैतन्याकारं ब्रह्मेव वह्न्यादिदेहव्यतिरेकेणोपलभ्यत एवेति चेत्, न—ब्रह्म कालत्रयेऽपि न विक्रियते; शक्तिस्तु प्रपञ्चदशायां विक्रियते- सत्त्वादिगुणवत्त्वादिति ।

ननु मायोपाधिब्रह्मणि यथा जीवत्वादिविकारमनुभवत्यपि तद्विकाराणां मायोपाधिगतत्वमुक्तं; तद्वत्कालोपाधिश्शक्तिः, तद्गता विकाराः कालगता वेति चेत्, नैवम्—सत्त्वादिगुणानां मायागतत्व-प्रसिद्धेरिव कालगतत्वाप्रसिद्धेः ।

ननु गुणसाम्यं प्रकृतिरिति गुणाभाव एव शक्तिगतः, न तु

गुणाः; ते तु कालगता एव । अत एव कालव्यतिकराज्जातो गुणक्षोभ इति कालोपाधिसम्बन्धेन प्रकृतेर्गुणवत्त्वमुक्तम् । गुणक्षोभ इत्यत्र प्रकृतिगतानां गुणानां प्रेरणमेव कालकृतं, न तु गुणाः । कालगता इति तु न वक्तव्यम् । गुणाभावस्य प्रकृतिगतत्वेन गुणसाम्यस्य गुणाभावरूपत्वेन च भवतैवोक्तत्वादिति चेद्भवतु—कालवशात्सगुणा, वस्तुतो निर्गुणा च शक्तिरिति । तथापि कालेनैव शक्त्यास्सद्वितीयत्वान्न ब्रह्मत्वमिति ।

ननु कालो व्यावहारिक एव, परमार्थतः काल एव नास्तीति मिथ्याभूतेन कालेन जगतेव न सद्वितीयत्वं शक्तेरिति चेन्न—ब्रह्म निर्गुणमिति श्रुतावुक्तम् । शक्तिस्तु सधर्मेति न शक्तिर्ब्रह्मेति । ननु निर्गुणमित्यस्य सत्त्वादिगुणाभाववदित्यर्थः । तेन श्रुत्युक्तब्रह्मलक्षणानि शक्तावुपपद्यन्त एवेति शक्त्यतिरिक्तं न ब्रह्म; किं च शक्तिर्ब्रह्मेत्यपि न मयोक्तं- ब्रह्मपदार्थस्यैवाभावादिति चेत्—सर्वश्रुतिस्मृतिविरोधादस्त्येव ब्रह्मेति । ननु नहि श्रुत्यादिविरोधोऽस्मन्मतस्य । श्रुत्यादिगतब्रह्मपदवाच्या इयमेव शक्तिरिति शक्त्यपरपर्यायं ब्रह्मपदमिति चेत् , नैवम्—प्रकृतेः शक्तित्वात् प्रकृतिविलक्षणस्य ब्रह्मत्वाच्च न शक्तिर्ब्रह्मपदाभिधेयेति ।

ननु प्रकृतिविलक्षणत्वं नाम सगुणप्रकृतिविलक्षणत्वं, तच्च निर्गुणशक्तौ वर्तत एव; अन्यथा त्वदुक्तरीत्या निर्गुणायाः प्रकृतेर्विलक्षणं ब्रह्म किं निर्गुणं स्यादुत सगुणम् ? नाद्यः- निर्गुणान्निर्गुणस्य वैलक्षण्याभावात् । न द्वितीयः- ब्रह्मणस्सगुणत्वाभावादिति चेत् , न—निर्गुणत्वाभाववत्सगुणत्वाभाववच्च ब्रह्मेति लक्षितत्वात् ।

ननु श्रुतियुक्त्यनुभूतिविरुद्धस्त्वदुक्तार्थः । तथाहि- श्रुत्या निर्गुणं ब्रह्मेत्युक्तत्वेन निर्गुणत्वाभावो वक्तुं शक्यते; सगुणत्वाभावस्तु प्रकृत्यावेव वर्तते, अत्र प्रमाणं तु भवद्वचनश्रुतिरेव; तादृश विरुद्ध-धर्मद्वयाधिकरणस्यान्यस्य वस्तुनोऽसम्भावितत्वान्न युक्तिः निर्गुणश-क्त्यतिरिक्तवस्तुनोऽननुभूतत्वान्नानुभूतिरिति चेन्मैवम्—सच्चिदान-न्दानां तल्लक्षणत्वात् ।

ननु तेऽपि शक्तेर्लक्षणान्येवेति पुरैव मया सिद्धान्तितं; यत-स्त्वया तेषां गुणत्वं निराकृत्याऽनिर्वचनीयाकारत्वं फणितं तत एव शक्तिस्वरूपमप्यनिर्वचनीयमिति ते शक्तिलक्षणान्येवेति चेन्मैवम्— स्वप्रकाशत्वस्य तल्लक्षणत्वात् । ननु तदपि धर्म एवेति निर्धर्मे ब्रह्मणि कथं तद्धर्मत्वमपि तु तच्छक्तेरेव धर्म इति; स्वप्रकाशत्वस्य भाव-रूपत्वेन धर्मत्वेन विप्रतिपत्तव्यमिति; तर्हि सा शक्तिरेवास्माकं मते ब्रह्मपदार्थ इति ।

ननु तर्हि ब्रह्म सगुणमेव- स्वप्रकाशत्वादिगुणवत्त्वादिति चेत्तर्हि निर्गुणश्रुतिविरोधः । ननु निर्गुणश्रुतिघटकीभूतगुणपदस्य सत्त्वादि-प्राकृतगुणपरत्वान्न विरोध इति; तर्ह्यप्राकृतगुणवत्त्वेन सगुणं, प्राकृत-गुणरहितत्वेन निर्गुणं च ब्रह्म भवतीति नास्मन्मतद्वयविरोधः, तर्हि शुभं भवतु ।

अयं राद्धान्तसारः—शक्तिस्सगुणैव गुणसाम्यस्य प्रकृतित्वात् । गुणसाम्यं नाम गुणानां समता, न पुनरभावः । सत्त्वादीनामुत्कर्षा-नुत्कर्षताराहित्यमिति यावत् । ब्रह्मानुसन्धानदशायामपि सा शक्तिस्तथा

वर्तत एव; किंतु तथा निष्कार्या कालकृतक्षोभाभावात् । मनोऽध्यात्मशक्तिरेव, यदा तन्निर्वृत्ति तदानीं तद्गुणसाम्यावस्थं प्रकृतिरित्युच्यते; तच्चात्मानुसन्धानदशायाम् । पञ्चभूतसत्त्वांशकार्यं मनस्तु सवृत्तिशक्तेरेव । शक्तेः कार्यत्वेन जन्यत्वं कथमनादित्वादिति न शङ्क्यं शक्तेरत्राप्यजन्यत्वात्; किंतु तद्वृत्तेरेव । अतः पञ्चभूतसत्त्वांशकार्यं मनोवृत्तिः, शक्तेर्निर्गुणत्वं कदापि नास्त्येव । तथात्वे हशक्तेशक्तित्वमेव न स्यात्, त्रिगुणात्मिका शक्तिरित्युक्तत्वात् । एतस्याः शक्तेर्लयोऽप्यस्त्येव - गुणानां लये सति तदात्मिकशक्तेरपि लीनत्वात् । उत्पत्तिस्तु न-- 'अजा'मितिश्रुतेः, उत्पत्तिहेतोरभावाच्च । विनाशस्य हेतुस्तु निर्गुणोपासनमेव- तदानीं गुणानां लयात् । एष गुणलयो विदुषामनुभवसिद्ध एव- तदानीं यत्किञ्चिदन्तःकरणवृत्त्यभावात् । मुक्तिदशायां मायालयोऽप्यनुभूयते; अस्याः स्वरूपं तु गुणात्मकतया निर्वाच्यमेवेति नानिर्वाच्यत्वेन ब्रह्मत्वम् । ब्रह्मणः पृथगनत्वेन कार्यकर्तृत्वेन च शक्तेस्तत्त्वं सदसद्भ्यामनिर्वचनीयमिति शक्तेः मायात्वमुक्तम् । सच्चिदानन्दा ब्रह्मण एव गुणाः, अनन्तत्वस्वप्रकाशत्वसुखत्वानि तेषां धर्माः, परम्परया ब्रह्मणोऽपि धर्मा एव । अत्र सकलहेयप्रत्यनीकाप्राकृतसच्चिदानन्दादिकल्याणगुणगण विशिष्टं, प्राकृतसत्त्वादिहेयगुणरहितं चेति सगुणनिर्गुणश्रुत्यविरोधः । ब्रह्मणि सर्वात्मना निर्गुणत्वं वक्तुं न शक्यते, निर्गुणत्वमपि धर्म एवेति तेनैव तस्य सगुणत्वापत्तेः । निर्विशेषत्वादयोऽपि ब्रह्मधर्मा एव- अभावानामपि भाववद्धर्मत्वात् । दुःखादीनां यथा रजोगुणधर्मत्वं, दुःखाभावादीनां सत्त्वगुणकार्यत्वं च, तथा गुणकार्येषु भावेष्वभावेषु वा गुणत्ववर्तनस्याक्षतत्वात् । निर्विशेषत्वं च

ब्रह्मणः प्राकृतविशेषराहित्यमेव । तस्माद्ब्रह्म हेयगुणरहितं, कल्याणगुण-सहितं चेति सिद्धान्तः ।

सत्यं ज्ञानमनन्तमक्षरमजं सान्द्रप्रमोदात्मकं
निर्भेदं च निरंजनं प्रविमलं शान्तं परं स्वप्रभम् ।
वाणी हृच्च निवर्तते भगवतो यस्माद्यदप्राप्य हि
तद्ब्रह्म प्रविशुद्धचित्तनिलयं ध्यायेम हाहा वयम् ॥

यं ब्रह्मेति च निर्गुणं शुभगुणं नारायणं चेति यं
शून्यं चेत्यपि यं परं पुरुषमित्येवं च यं ये च ये ।
व्याकुर्वन्ति हृदा भजन्ति निजभाभ्रश्यद्विवादं परं
स्वात्मानं स्वशुभात्मगं तमनिशं ध्यायेम हाहा वयम् ॥

निजभया ब्रह्मसाक्षात्कारेण हेतुना भ्रश्यन्ति विवादा यस्येति स्वेन साक्षात्कृतस्य ब्रह्मणः प्राकृतगुणरहितत्वात्, स्वप्रकाशत्वादिगुण-वत्त्वात्सर्वजगदभावेन तत्र शून्यत्वात्पुरुषाणामात्मनां मध्ये प्रेरकत्वादिना परत्वादपि पुरुषत्वानपायात् । अद्वैतिनां विशिष्टाद्वैतिनां माध्यमिकानां साङ्ख्ययोगिनां च ते ते विवादा एकार्थबोधकत्वेन भ्रष्टास्साम्यमापन्ना इति भावः ।

श्रवणादिसंस्कृतहृदाऽविशेषतो
यदभीयते न च हृदे दृगित्यपि ।
हृदयस्य गोचरमथाप्यगोचरं
परमं बृहत्तदनिशं लभामहे ॥

ननु हृदयस्यागोचरं ब्रह्म कथं हृदा ध्यातुं शक्येतेत्यत आह--

श्रवणादिति । 'मनसैवानुद्रष्टव्य'मिति श्रवणादिसंस्कृतेन मनसा यत् अभिधीयते· प्राप्यते । नच पुनस्तत्र·विशेषास्तेन ज्ञायन्ते विशेषाभावादित्याह—अविशेषत इति । केवलेनानुभूयत इति भावः । श्रवणाद्यसंस्कृतहृदयेन तु न ज्ञायते । स्वतः प्राप्तत्वात्प्राप्यत एव, नतु प्राप्यत इति ज्ञायते । किमिति- ईदृगिति । यदि ज्ञायते तर्हीदृगिति वक्तव्यमतो न ज्ञायते ।

वस्तुतस्तु ईदृक्त्वादिरेव ब्रह्मणि नास्ति । इयान् विशेषः-निर्भेदं ब्रह्म मया प्राप्यत इति संस्कृतमनसा ज्ञायते; असंस्कृतमनसा तु प्राप्यमाणमपि न ज्ञायते· मनसोऽसंस्कृतस्यापि ब्रह्मप्राप्तिः सुषुप्तिपूर्वक्षणे भवति- तदानीं सर्ववृत्तिपरिहारात् ।

इति ब्रह्मवादः ।



श्रीहयग्रीवाय नमः ।

# वेदान्ततत्त्वामृते

## तृतीयो भागः

### अथ मुक्तिवादः ।

मुक्तिर्नाम सायुज्यं, तच्च ब्रह्मणो भवति जीवस्येत्यद्वैतिनां मुक्तिः । नन्वानन्दावाप्तिर्मोक्ष इति हि परिभाषाकार इतिचेदुभयोरैकार्थ्यान्न दोषः- ब्रह्मण आनन्दत्वात्सायुज्यस्यावाप्त्यर्थकत्वाच्च । ननु सायुज्यस्यैवावाप्त्यर्थकत्वे ब्रह्मसायुज्यमेतीत्यत्र प्राप्त्यर्थकस्यैतेः प्रयोगेन पौनरुक्त्यमितिचेत् , न—मुक्तिमेतीत्यादिवत्सायुज्यमेतीत्युभयमपि प्राप्नोतीत्यर्थ एव पर्यवस्यति । यथा वा सुखप्राप्तिर्भवतीत्यादिलौकिकप्रयोगेषु सुखं प्राप्नोतीत्याद्यर्थो निर्दुष्टस्तथा ।

ननु जीवो ब्रह्म प्राप्नोतीति मुक्तावपि त्रिपुटीसद्भावात्कथमद्वैतत्वं ब्रह्मण इतिचेत, न—ब्रह्मप्राप्तिर्नाम ब्रह्मस्वरूपेणावस्थानं, तथाच जीवस्य ब्रह्मभावो मोक्षः । नन्वन्यस्य वस्तुनः कथमन्यभाव इतिचेज्जीवो न ब्रह्मणोऽन्यद्वस्तु, किंतु तदेव । नन्वन्तःकरणावच्छिन्नचैतन्यस्य चिदाभासस्य जीवस्य कथं मायोपहितचैतन्यब्रह्मत्वमिति चेत् , उच्यते—अन्तःकरणावच्छिन्नत्वमायोपहितत्वयोर्विशेषयोर्मिथ्यात्वेनोभ-

यत्रापि चैतन्यत्वाविशेषात्, मुखाभासस्य मुखत्व इव चिदाभासस्य चितोऽनन्तत्वाच्च । ननु बिम्बात्प्रतिबिम्बो भिन्न एव, रूपांशे एकत्वेऽपि पृथक्प्रतीतिजनकत्वात्, एकस्यार्थक्रियाकारित्वेऽपि अपरस्य तदभावाच्चेति चेदस्तु रूपैकत्वाद्यथा पक्षे तयोरेकत्वं तथा स्वरूपभूतचैतन्यांशे एकत्वाज्जीवब्रह्मणोरेकत्वमक्षतमेव । यत्पुनः प्रतीत्यादिषु नैकत्वं तन्न, वस्तुत इति ।

ननु बिम्बप्रतिबिम्बयोस्तत्त्वैकत्वेऽपि न साक्षादेकत्वमिति कथं मुक्तावनयोरेकत्वमितिचेत्, उच्यते—दर्पणस्थानीयान्तःकरणोपाधिविलयात् । ननु दर्पणलये प्रतिबिम्बस्यापि लय एवेति केन सह पुनर्बिम्बस्य सायुज्यमितिचेत्तथैव—सर्वस्यापि कार्यमात्रस्य स्वकारण एव लयाङ्गीकारात् । तेन सर्वमपि कार्यजातं स्वकारणेन सायुज्यमाप्नोत्येवेति । ननु 'अजो ह्येको जुषमाणोऽनुशेते, अजो नित्यश्शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे' इत्यादिश्रुतिस्मृतिभिर्जीवस्य जन्मनाशनिषेधेन जन्मनाशयुक्तमुखाभाससादृश्यमनुपपन्नमिति चेत्, न—मुखादाभासस्य जन्मनाशौ यथा दर्पणोपाध्यधीनौ तथा जीवस्यान्तःकरणोपाध्यधीनौ न वस्तुत इति । जीवस्य वस्तुतो ब्रह्मरूपत्वेन जन्मनाशौ श्रुतयो निराचक्रुः; जन्मनाशप्रतीतिस्तु आभासस्यैव मिथ्या । तेन यथा संसारो मिथ्या तथा मुक्तिरपीति सिद्धम् । ननु वस्तुत उपाध्यभावे जीवस्यैवाभावेन कथं पुनस्तस्य ब्रह्मत्वमितिचेन्नहि—ब्रह्मैवोपाधिवशाज्जीवरूपेण जातः- ज्ञानेनान्तःकरणलये जीवत्वमपहाय ब्रह्मरूपेण स्थित इति सिद्धान्तात् । जीवस्योपाधिवशाज्जन्मनाशौ सिद्धाविति फलितार्थकथनमिदम् । ननु भीष्मादिवधमुद्दिश्य शोचन्तमर्जुनं

प्रति भगवता कृष्णेन गीताया'मजो नित्य' इत्यादिकायां स्मृतावयंपदेन भीष्मादिशरीरचेतयिता जीव एवाभिधीयते, नतु ब्रह्म । शरीरे मृतेपि तदन्तर्गतः वक्तृत्वादिगुणविशिष्टः प्राणादिमान् भीष्मादिपदाभिधीय-मानो जीवो न म्रियते । शरीरमनु जीवस्य जन्मनाशौ न वस्तुत इति पूर्वापरसन्दर्भानुगुण्यादुक्तत्वाच्च । तथाच जीवस्य शरीरोपाधिवशादेव जन्मनाशौ न वस्तुत इति जीवो नित्य एव, नतु मिथ्येतिचेत्, न—चिदाभासाधिष्ठानकूटस्थचैतन्यमुद्दिश्य नित्यत्वादिकं तेनोक्तम् । जीवस्य शरीरमनु जन्माद्यभावेऽप्यन्तःकरणमनु जन्मनाशसद्भावात् । नन्वेवं मुक्ति-र्नाम जीवस्य लय एवेति कथं स्वलयस्य स्वपुरुषार्थत्वमितिचेन्नहि—यथा दरिद्रः स्वस्वरूपनाशमङ्गीकृत्य महाराजादिस्वरूपमभिवाञ्छति तथा जीवोऽपि स्वरूपनाशेनापि अविकानन्दब्रह्मरूपतामिच्छतीति ।

ननु तत्र न जीवस्य लयः, किंतु दरिद्रशरीरस्यैवेति दृष्टान्त-वैषम्यमिति चेत, न—अत्रापि जीवस्वरूपभूतकूटस्थचैतन्यस्य न लयः, किंतु चिदाभासस्यैवेति । ननु कूटस्थचिदाभासयोः किं भेदः ? उताभेदः ? आद्ये जीवस्य स्वरूपनाशो दुष्परिहारः । द्वितीये—सविकारत्वनिर्विकारत्वयोरेकत्रावस्थानविरोध इतिचेत्, नहि—कूटस्थ-चैतन्यमेव चिदाभासस्याधिष्ठानभूतं सत्स्वरूपभूतमिति, कूटस्थस्य चिदा-भासत्वं मिथ्याकूटस्थत्वं नित्यमिति न तयोर्भेदः । चिदाभासस्याप्येवं-रीत्या जीवत्वं मिथ्याकूटस्थत्वं नित्यमिति तयोरभेद एव । अतः कूटस्थब्रह्मणोरैक्यं मुक्तिरिति फलितम् ।

ननु जीवब्रह्मणोरिति पूर्वोक्तव्याघात इतिचेन्न —जीवो जीवत्वं विहाय कूटस्थात्मना तिष्ठन् ब्रह्मणा सायुज्यमेतीति विवक्षितत्वात् ।

जीवो नामात्र साधिष्ठानचिदाभासः पुरुषशब्दवाच्यः, तेन जीवस्य जीवत्वहानावपि न स्वरूपनाशापत्तिः ।" ननु तर्हि जीवस्य कूटस्थात्मनावस्थानं मुक्तिरिति वक्तव्यं, कथं ब्रह्मात्मनेति चेत्, न—कूटस्थब्रह्मणोरैक्यात्, अन्तःकरणमायोपहिततत्वाभ्यां ह्येकमेव शुद्धं चैतन्यं कूटस्थब्रह्मपदाभ्यां व्यवह्रियते । अतस्स्वस्वरूपेणावस्थितिर्मुक्तिरिति निष्कर्षः । स्वस्वरूपावस्थितिर्नामाऽन्तःकरणेन सह तादात्म्याध्यासाभावः; स च तल्लये भवति । तस्मादेव लिङ्गभङ्गे हि मोक्ष इत्यादि भागवतम् ।

ननु ब्रह्मणोऽप्यौपाधिकत्वे किं पुनर्निरुपाधिकमिति चेत्—तदेव वस्तुत इति विद्धि । अत्रेदं तत्त्वं-- ब्रह्मचैतन्यमेकमेव; शुद्धब्रह्मेति परमार्थदशायां व्यवहारदशायां जगदधिष्ठानं सन्मायोपहितब्रह्मेति; इदमेव मायाशबलितब्रह्मेतिपदेनाभिधीयते; चिदाभासाधिष्ठानं सत्कूटस्थ इत्यमुमेवात्मानमाहुः । मायाप्रतिफलितं सदीश्वर इति, अन्तःकरणप्रतिफलितं सज्जीव इति च पञ्चविधम् । तत्रापि जीवेश्वरयोर्जाग्रदाद्यवस्थात्रयवशात्प्रत्येकं त्रैविध्यम् । तन्नामानि तु विराट्सूत्रहिरण्यगर्भा हीश्वराः, विश्वतैजसप्राज्ञा जीवाश्चेति ।

ननु चिदाभासाधिष्ठानं चिदाभासस्वरूपं कूटस्थचैतन्यं सदाऽप्येकरूपमेव, चिदाभासस्सदाऽपि मिथ्यैवेति स्वस्वरूपावस्थितेर्न पुरुषार्थत्वं सदापि प्राप्तत्वादिति चेत्—प्राप्तप्राप्तिरपि फलमेव; यथा हस्तस्थं विस्मृतं स्वर्णं केनचित्प्रोक्तं सदप्राप्तस्वर्णप्राप्तिरिव हर्षं जनयति तथा ।

ननु स्वस्वरूपेण यत्सदाप्यवस्थितं तस्य कूटस्थस्य न संसृतिः, यत्पुनस्सदापि विक्रियते तस्य चिदाभासस्य न मुक्तिरतो व्यर्थं गुरुशास्त्रादिकमिति चेत्, न—निरधिष्ठानविभ्रान्तेरसिद्धत्वादयं साधिष्ठानः पुरुषशब्दवाच्यः । अतोऽस्य मनसा सह तादात्म्याध्यासे संसारः, तदभावे अधिष्ठानात्मकतया स्थित्या मुक्तिरिति । तादात्म्याध्यासहेत्वज्ञाननिरासायावश्यकमेव गुरुशास्त्रादिकमिति । ननु सर्पादिभ्रमस्य कथमधिष्ठानरज्ज्वादिसाहित्यमिति चेत्, उच्यते—सर्पभ्रमेऽप्यस्त्येव रज्जुगतवक्रत्वस्थूलत्वाद्यधिष्ठानांशसाहित्यमन्यथा सर्पभ्रम एव नोदीयात्तथा प्रकृतेऽपि चिदाभासभ्रमे अधिष्ठानचैतन्यसहितं वर्तत एवेति । ननु सर्पोऽयमिति रज्जौ पुरुषस्य भ्रमो भवति, प्रकृते चैतन्ये चिदाभासभ्रमः कस्य भवतीति चेत्, न—अधिष्ठानगतायां शक्त्यात्मिकायामविद्यायां चैतन्यं प्रतिफलितं सत्तस्य ज्ञानाश्रयत्वेन अविद्यांशप्राधान्येनाहं चिदाभास इति, अधिष्ठानांशप्राधान्येनाहं कूटस्थ इति च जानाति । ब्रह्मज्ञाने सत्यधिष्ठानांशप्राधान्यं, तदभावेऽविद्याकार्यतदभिन्नतत्त्वमनस्तादात्म्येनाविद्यांशप्राधान्यं चेति वेद्यम् । ननु प्रतिफलितस्य मुखस्य यथा मुखाभासत्वं प्रमा तथा प्रतिफलितचैतन्यस्य चिदाभासत्वमपि प्रमैवेति कथं चिदाभासस्य भ्रमत्वमिति चेत्, न—पारमार्थिकसत्त्वाद्यद्वस्तु न भवति तत्सर्वं भ्रम एवेत्यस्मन्मतम् ।

ननु चिदाभासस्याऽहं चिदाभास इति चिदाभासत्वेन ज्ञानमपि यदि भ्रमस्स्यात्तर्हि कूटस्थत्वेन ज्ञानं किं प्रमा स्यात्; विरुद्धं हीदं- यस्माद्घटो घटत्वेन ज्ञातश्चेद्भ्रमः, पटत्वेन ज्ञातश्चेत्प्रमेति लब्धं; किं न कूटस्थत्वेन ज्ञानमपि पारमार्थिकसत्तावन्न भवतीति तद्ज्ञान-

स्यापि कथं प्रमात्वम् ? अतोऽन्तःकरणवृत्तिरूपस्य ज्ञानस्य प्रमात्वमेव न सिध्येदिति चेत् , न—पारमार्थिकसत्तावद्वस्तुयाथार्थ्यज्ञानं प्रमेति ।

ननु व्यावहारिकसत्तावद्वस्तुयाथार्थ्यज्ञानमपि प्रमैव, यथा रज्जुज्ञानमिति चेत्— तर्हि चिदाभासस्याविद्याप्रतिफलितत्वेनाऽविद्याकल्पितत्वाद्भ्रमत्वमस्तु । ननु दर्पणप्रतिफलिते मुखाभासे न हि भ्रमत्वव्यवहार इति चेन्न—अस्त्येव, किमु तं मुखाभासं पारमार्थिकं मुखमवयन्ति ? किं च मुखाभासस्य भ्रमत्वेऽस्त्येवार्थक्रियाकारित्वादिप्रामाणिकपदार्थधर्माभावरूपो हेतुः । ननु भ्रमो नामायथार्थज्ञानं, तच्च तदभाववन्निष्ठविशेष्यतानिरूपितनन्निष्ठप्रकारताशालित्वं; अतः प्रकृते मुखाभासे मुखाभासत्वबुद्धिर्यथार्थज्ञानमेवेति चेत् , न—पारमार्थिकसत्ताभाववद्व्यावहारिकसत्ताभाववच्च वस्तु भ्रान्तिज्ञानविषयमित्यस्मन्मतम् ।

ननु व्यावहारिकसत्तारहितस्य प्रातिभासिकस्य स्वप्नगजादेर्भ्रमत्वं लौकिकैरप्यङ्गीकृतमेव, कथं पुनर्व्यावहारिकस्य जगतो भ्रमत्वमिति चेन्न--अध्यात्मज्ञानिभिस्तस्य पारमार्थिकसत्ताभावेन भ्रमत्वमङ्गीकृतमिति ।

ननु चिदाभासस्य जगदन्तःपातित्वेन यथा परमार्थदशायां मिथ्यात्वेन व्यावहारिकत्वं त्वयाऽङ्गीकृतं, तथा मुखाभासस्यापीति कथं मुखाभासः प्रातिभासिकः ? मुखं व्यावहारिकमिति च कृत्वा त्वया व्यवहारदशायां मुखाभासस्य पारमार्थिकत्वं निराकृतमिति चेदुच्यते—अविद्याकल्पितत्वाविशेषेऽपि जाग्रत्स्वप्नजगतोस्स्वप्नकल्पितत्वेन हेतुना स्वप्नजगतो भ्रमत्वं यथा लौकिकव्यवहारसिद्धं, तथा मुखप्रतिमुखयोरप्यविद्याकल्पितत्वाविशेषेऽपि दर्पणकल्पितत्वेन हेतुना प्रतिमुखस्य

भ्रमत्वव्यवहारोपीति । नन्वेवं चिदाभासस्यापि सत्यप्यविद्याकल्पितत्वे अन्तःकरणप्रतिबिम्बितत्वेन नास्ति व्यावहारिकत्वमितिचेत्, न—एकैवाविद्या कूटस्थस्योपाधीभूयान्तःकरणमिति, ब्रह्मण उपाधीभूय मायेति च व्यवह्रियत इति । अविद्यान्तःकरणयोरेकत्वान्नोभयकल्पितत्वं तस्येति ।

ननु कूटस्थब्रह्मणोरेकत्वेन व्याहतेयमुक्तिः; उपाधिं विना तयोर्भेदाभावात्तयोर्भेदं विना उपाधिभेदाभावाच्चान्योन्याश्रयादितिचेत्, न—एकैकशरीरावच्छिन्नत्वसर्वजगदवच्छिन्नत्वाभ्यां जीवेश्वरसाक्षिणोस्तयोर्भेदात् । इदमत्र तत्त्वम्- सृष्टेः प्राग्ब्रह्मचैतन्यमेकमेव, अविद्याप्येकैव मायाख्या, सृष्ट्यनन्तरं तत्तद्देहेषु व्याप्य स्थितं चैतन्यं कूटस्थाभिधम् । एते च कूटस्था जीवसाक्षिणोऽनन्ताः- चैतन्यस्य तत्तद्देहावच्छिन्नत्वात् । एतस्योपाधिभूता एतन्निष्ठा शक्त्यात्मिका सा अविद्यान्तःकरणमिति कथ्यते, एतानि नाना, एतत्प्रपञ्चदशायामपि ब्रह्मचैतन्यमेकमेव - सर्वस्य जगतस्तदवच्छेदकत्वात् । तदुपाधिरविद्याप्येकैव- एकब्रह्मनिष्ठशक्तिरूपत्वादन्तःकरणैः कल्पितानां जीवानां मायया कल्पितस्येश्वरस्य च । तस्माद्व्यावहारिकत्वं सुस्थम् । अन्तःकरणस्य निर्वृत्तिमत्त्वमेव तत्त्वं, वृत्तिसद्भावे तु वृत्तिभेदान्मनो बुद्ध्यादिशब्दवाच्यं भवति; चिदाभासस्तु वृत्तिमदन्तःकरणतादात्म्यमापद्य संसरति; अन्तःकरणप्रतिबिम्बितत्वमात्रेण तु न चिदाभासस्य संसारः- अन्तःकरणस्य निर्वृत्तिमत्त्वेनाविक्षेपजनकत्वात् । तस्मान्मनससकाशाज्जीवस्य संसारः, मनोलये सुषुप्तौ तदभावः; एतदुभयं सर्वानुभवसिद्धम् । अन्तकरणलये तु मुक्तिः; एतदभिप्रेत्यैव मनः सुषुप्तौ संस्कारात्मना वर्तते । तस्मा-

त्सुषुप्तिर्न मुक्तिरिति पुरोक्तम् । संस्कारात्मनेत्यस्यान्तःकरणात्मनेत्यर्थस्य विवक्षितत्वात् । अतश्चिदाभासस्य स्वतो न संसारः, कूटस्थस्य तु न स्वतो न परतश्च संसारः; तेन नाऽस्य मुक्तिः- बन्धस्यैवाभावात् । चिदाभासस्य तु मनसा स्वस्मिन्नारोपितस्य संसारस्य ज्ञानेन विनाश-सम्भवान्मुक्तिरस्ति । साच मुक्तिरन्तःकरणलये तत्प्रतिबिम्बितस्य स्वस्यापि लयाच्चिदाभासलयात्मिकैव । चिदाभासो मनोलयात्संसारमपोह्यान्तःकरण-लयाच्चिदाभासत्वमुत्सृज्य कूटस्थत्वमुपेत्य कूटस्थावच्छेदकमनःप्राणादि-शरीरलयेन ब्रह्मचैतन्येनैकीभवति; इदमेव ब्रह्मसायुज्यमुक्तिरिति ।

ननु 'शक्तिस्स्वाश्रयवस्तुनाशानुनाशवती शक्तित्वादग्निशक्ति-व'दिति विशेषदृष्टान्तवत्सामान्यानुमानेन शक्तिमद्वस्तुनाशे शक्तिनाशः, तदनाशे शक्त्यनाश इति लब्धम् । नचाग्निशक्त्या मणिमन्त्रादिनाऽ ग्निनाशात्प्रागपि नाशश्शङ्क्यः- मणिमन्त्रादेः तत्प्रतिबन्धकत्वमालाङ्गी-कारात् । तस्मात्प्रकृते नित्यकूटस्थनिष्ठान्तःकरणशक्तेः कथं लयः ? नच प्रतिबन्धोऽस्त्विति वाच्यं, प्रतिबन्धकपदार्थान्तराभावात् । अस्ति ब्रह्मेति तु न वाच्यं, तस्य कूटस्थानन्यत्वात्; नापि मायास्तीति, तस्या अन्तःकरणानन्यत्वात्; नापीश्वरोऽस्तीति, सत्यपि तस्मिन्संसार-दशायामन्तःकरणस्य कृतकार्यत्वादितिचेत्, न—शक्तिः परमार्थतो नास्ति, कार्यस्य व्यावहारिकत्वेन तद्गम्यायाश्शक्तेरपि व्यावहारि-कत्वात् । 'निस्तत्त्वा कार्यगम्याऽस्य शक्तिर्मायाग्निशक्तिव'दिति विद्या-रण्यैः- शक्तेर्मिथ्यात्ववचनात् ।

ननु परमार्थदशायां ब्रह्मणि शक्तेरेवाभावे पारमार्थिकाद्ब्रह्मणः

कथं जगदाविर्भाव इतिचेत्, उच्यते—ब्रह्मणस्सकाशात्प्रथमं शक्त्युदयः, पश्चात्सशक्तिकात्तस्माज्जगदुदय इति । ननु ब्रह्मणि जगदविद्यया उदेतु, सा तु कया कल्प्यतामितिचेत्स्वत एव । ननु अजामितिश्रुत्या शक्तेः जन्मनिषेधात् श्रुतिविरोध इतिचेत्, न—अजां नाम परतो जन्मरहितामित्यर्थात् । ननु स्वस्य स्वकल्पकत्वं वदतस्तव वचः कथं न व्याहतमितिचेत्, न—रज्जुः सर्पात्मत्वेन ब्रह्म शक्त्यात्मना प्रथमं विवर्तत इति विवर्तवादाश्रयणेन ब्रह्मणः शक्त्युदयाङ्गीकारात् ।

ननु रज्जुरविद्यया सर्पात्मना विवर्तताम्, ब्रह्म तु शक्त्यात्मना कया करणभूतया विवर्तत इतिचेत्, न—तदभावादेव स्वत इत्युक्तम् । ननु रज्जोस्सकाशादपि सर्पस्य स्वत एव कल्पितत्वं किमिति नोच्यतामितिचेद्रज्जोः केवलाया नास्ति तथाविधसामर्थ्यमिति, ब्रह्मणस्तदस्तीति वैषम्यात् । ननु ब्रह्मणः सामर्थ्यमस्ति शक्त्युत्पादन इति वदतस्तव मते या शक्त्युत्पादनशक्तिरन्या स्वीकृता, सा कुत्र कल्पिता? कया वा? एवमनवस्थापत्तेः त्वद्वचो व्याहतमितिचेत्तर्हि यथा जगद्ब्रह्मणि कल्पितमविद्यया तथा शक्तिस्तस्मिन्न कयापि कल्पिता, किंतु ब्रह्मणस्सकाशाच्छक्तिरुदभूदिति ।

ननु अस्मिन्नपि पक्षे शक्त्युत्पत्तेस्समवायिनिमित्तकारणे वक्तव्ये; न तावद्ब्रह्म शक्तेस्समवायि, ब्रह्मणस्सत्त्वाच्छक्तेर्मिथ्यात्वाच्च; नाप्यन्यद्वस्तु- अभावात् । नच ब्रह्म निमित्तं, शक्तेर्ब्रह्मणि स्थित्यभिधानात् । घटो मृदि वर्तते, नतु कुलाले वर्तते हीतिचेत्, उच्यते—ब्रह्म उपादानमेव, उपादानाद्विषमसत्ताककार्योत्पत्तिर्दृश्यते हि लोके शुक्तिरजत-

लादौ । ननु 'तुष्यतु दुर्जन' इति न्यायेन तथैव भवतु, तत्र निमित्त-कारणमस्त्यविद्या; अत्र तु किमस्तीति चेत्कालोऽस्ति । ननु शक्त्या कल्पितत्वं हि कालादीनामिति चेत्, न—शक्तेरपि प्राचीन एव कालः। ननु स कुत्र आसीत्? ब्रह्मण एव ।

ननु तत्र यथाकथंचिद्ब्रह्मण उपादानत्वेऽपि कस्य निमित्तत्वम्? ब्रह्मण एव । नन्वभिन्ननिमित्तोपादानत्वं काप्यदृष्टमसम्भवि चेति चेत्, न—अनुव्यवसायादिकं प्रति ज्ञानादेरुभयविधकारणत्वदर्शनात् । ननु तथापि स्निग्धमृदि घटोत्पादकशक्तिरिव ब्रह्मण्यपि शक्त्युत्पादकशक्तिः काचनाङ्गीकर्तव्येति चेत्, न—घटोत्पादकशक्तिर्मृदीव जगदुत्पादक-शक्तिर्ब्रह्मण्यासीदिति दृष्टान्तवाक्यं; न तु त्वदुक्तम् । तथात्वे घटश-क्त्युत्पादकशक्तिरपि काचन मृदङ्गीक्रियेतेति ।

ननु तथैव शुष्कमृदो घटोत्पादकशक्त्यभावेनार्द्रीकृतायास्तस्या एव तथाविधशक्त्युदयेन च मृदि घटोत्पादकशक्त्युत्पादका काचन शक्तिर्जलसंयोगे वर्तेत इत्यङ्गीकर्तव्यैव । एवं घटशक्त्युत्पादकशक्ति-रिव जगच्छक्त्युत्पादकशक्तिरपि काचनाऽवश्यं वर्तेत । सा च जल-संयोगादाविव कुत्रचिद्वर्तेत; तच्छक्तिशक्त्याश्रयं वस्तु न ब्रह्म भवितु-मर्हति- असम्भवात्; न तद्भिन्नं वस्तु- अभावात् । किं च कदा-चिज्जगच्छक्तिरस्ति, कदाचिन्नास्तीति कालकृतस्वगतभेदप्रसक्त्या ब्रह्मणः 'एकमेवाद्वितीयं ब्र'ह्मेति श्रुतिर्व्याकुप्येतेति चेत्तर्हि—ब्रह्म-शक्तेर्नोदयो न नाशः; परं तु ज्ञानेन तस्याः प्रतिबन्ध एवेति ।

नन्वन्तःकरणवृत्तेर्ज्ञानस्य परमार्थदशायामभावात्कथं तेन तस्याः

प्रतिबन्ध इति चेत्तर्हि- ईश्वरसङ्कल्पेनेति विद्धि । ननु चिदाभासानां मुक्तावीश्वरसङ्कल्पस्य कारणत्वे ईश्वरस्य मुक्तौ कस्य कारणत्वमिति चेत्—तत्राप्यमोघ ईश्वरसङ्कल्प एव । ननु मायाया अपि प्रतिबन्धे ईश्वराभावेन मोक्ष्यमाण चिदाभासमुक्तिहेतुसङ्कल्पवानन्यः को वा भवेदीश्वर इति चेत्—मुमुक्षुरीश्वरः कस्मैचिद्भक्ताय स्वसामर्थ्यं दत्वा स्वयं मुच्यते; स चान्यस्मा इति ।

ननु मायाप्रतिफलितचैतन्यात्मकेश्वराभावप्रसङ्ग इति चेत्तर्हि ईश्वरस्य न मुक्तिरिति वाच्यम् । नन्वहो यस्स्वयं तर्तुमशक्तस्स कथमन्यांस्तारयेदिति चेत्तर्हि जीवादृष्टं शक्तिप्रतिबन्धकमिति वाच्यम् । ननु 'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशु'रित्यादिश्रुतिभिर्ज्ञानेतरेषां मुक्तिहेतुत्वनिरासादिति चेत्, न—ज्ञानेन मनःप्रतिबन्धे सत्यनेकप्राग्भवीयतादृशज्ञानजन्यादृष्टवशाद्भवत्यन्तःकरणप्रतिबन्ध इति ।

ननु किञ्चिद्ज्ञानां जीवानामेव किञ्चिद्ज्ञानेन मनःप्रतिबन्धे सति मुक्तिर्भवेदित्यङ्गीकृता, सर्वज्ञस्येश्वरस्य न किञ्चित्प्रतिबन्धकं तावदपि ज्ञानं नास्ति, येन मुच्येतेति चेदुच्यते—ईश्वरस्स्वावरकमायानिष्ठसत्त्वादिगुणत्रयवशाद्ब्रह्मादिशरीरत्रयवान्भवति । यावच्छरीरपातं जीवानामिव तेषामपि ब्रह्मादीनामीश्वरतत्त्वानां न मुक्तिः, किं तु ज्ञानादिगुणैर्जीवेभ्य उत्कृष्टा इति । ननु तेषां मुक्तौ पुनः के ईश्वरा इति चेत्—तत्तत्पूजकानां पुनस्तदाधिपत्यं भवेत् । ननु तत्पूजकानामानन्त्ये कथमीश्वरत्रयमिति चेत्—त्रय ईश्वरा भवन्ति । अन्ये तु तत्तल्लोकवासिनो भवन्तीति ।

ननु शरीरयोगो भवतु, कथं पुनरन्तःकरणप्रतिबिम्बितानां जीवानां मनुष्यशरीरत्यागपूर्वकदेवशरीरस्वीकारेऽपि मायाप्रतिबिम्बितत्वं येनेश्वरा भवेयुरितिचेत्, उच्यते—कूटस्थब्रह्मणोरेकत्वेन तच्छक्त्यो-रप्येकत्वात् । एकं ब्रह्म चैतन्यं मनुष्यशरीरे स्थित्वा तच्छरीरानुगुणया आत्मशक्त्यान्तःकरणात्मकया तादात्म्याध्यासं प्राप्य, जीवस्सन् अदृष्ट-वशाद्विष्ण्वादिशरीरमेत्य, तदनुगुणपरिणामायां मायायां प्रतिफलित ईश्वरो भवतीति ।

ननु कस्यादृष्टवशादीश्वरशरीरप्राप्तिः? न तावद्ब्रह्मणः- तस्यादृष्टा-द्यभावात् । न जीवस्य, एकस्मिन्दर्पणे प्रतिफलितस्य प्रतिबिम्बस्यान्यस्मिन् प्रतिबिम्बनायोगादितिचेत्, न—अन्तःकरणस्य मायाऽनन्यत्वात् । ननु स एव कूटस्थः, सैव शक्तिः, स एव प्रतिफलित इति जीवस्य ब्रह्मादि-शरीरप्राप्तावपि कथमीश्वरत्वमितिचेत्, न—शरीरप्राप्तिरेव जीवत्वेश्व-रत्ववैलक्षण्यहेतुर्यथा कीटादिशरीरानुगुण्येन जीवस्य ज्ञानविषयकन्यूना-धिकस्वभावस्तथा मनुष्यदेहे स्थित्वा किंचिदूज्ञः, ब्रह्मदेहे स्थित्वा सर्वज्ञ ईश्वरस्स भवतीति ।

अयं भावः—ईश्वरत्वे प्रयोजकं सर्वज्ञत्वादिकं गुणगण एव, तच्च चैतन्यस्य शुद्धस्य मायातादात्म्याद्भवति; शक्त्या अप्येकस्या मायात्वे प्रयोजकं तैजसशरीरविशेष एव । तैजसशरीरहेतुस्तु अदृष्ट-विशेषो देहिनामित्येवंस्थिते जीवो मनुष्यदेहे स्थित्वा, भक्तिज्ञानादि-मान्भूत्वा, ईश्वरशरीरप्राप्तिहेतुमदृष्टमुत्पादयित्वा, स्वदेहारम्भककर्म-क्षयेन देहमुत्सृज्य, तादृगदृष्टवशात्तैजसशरीरं प्राप्य, तच्छरीरवशादत्य-

द्भुतप्रज्ञावत्त्वेन मायाभूतया स्वान्तःकरणशक्त्या तादात्म्यमापद्य, सर्वज्ञत्वादिगुणवानीश्वरो भवेदिति ।

ननु शरीरभेदात्प्रतिबिम्बभेदाच्छक्तिभेदात्साक्षिभेदाच्च यथा जीवानां तत्साक्षिणां चानन्त्यमङ्गीकृतं तथा ईश्वराणामपि त्रयाणामेकत्वाभावः किमिति नाङ्गीक्रियत इतिचेन्मायाया एकत्वमेव, तद्गुणानामेव भिन्नत्वमिति । नन्वन्तःकरणमप्येकमेव, सत्त्वादिगुणन्यूनाधिकत्वादिभिरेव तस्याप्यानन्त्यमितिचेद्भवत्वीश्वरत्रयं का नो हानिरिति । नन्वीश्वराणां भेदे तत्साक्षिणां ब्रह्मणामपि भेदादद्वितीयं ब्रह्मेति न सिद्ध्येदिति त्वन्मतस्य स्वरूपहानिरेवेतिचेत्, न—ईश्वरभेदेऽपि न साक्षिभेद इति । ननु तथात्वे ब्रह्मादिभिरनुभूतानां, विष्ण्वादिभिरनुसन्धानं स्यादितिचेदिष्टापत्तिरेव ।

ननु सर्वश्रुतिस्मृतीतिहासपुराणन्यायविरोध इति । तथाहि-- 'नारायणाद्ब्रह्म जायते, नारायणाद्रुद्रो जायत' इत्यादिश्रुतिः, 'क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गे सम्भूतौ तस्मात्केशवनामवा'नित्यादिस्मृतिः, पुरा किल भगवान् भृगुः त्रिमूर्तिषु भगवन्तं नारायणं केनचित्प्रकारेण निर्धारितवानीश्वरमित्यादीतिहासः, 'स्वधर्मनिष्ठः शतजन्मभिःपुमान्विरिञ्चतामेति ततःपरं हि माम् । अव्याकृतं भगवतोऽथ वैष्णवं पदं यथाहं विबुधाः कलात्यये' इत्यादिपुराणम् । ईश्वरो हि नियन्ता, तच्च नियमनमर्थात्स्वेतरेषां न ह्यनेकैरीश्वरैरेको जीवो नियम्यत इति शक्यते वक्तुम् । किंच त्रयाणामपि तेषामस्ति वा नवा परस्परनियन्तृत्वम् । आद्ये- त्रयाणामन्यतमेन यो नियम्यते स

कथं नियन्ता स्यात्? द्वितीये- नियन्तृत्वस्य सङ्कोच एव । अपि च रजोगुणत्वेन ब्रह्म यज्जगत् सिसृक्षति, तमोगुणत्वेन तच्छिवो जिहीर्षतीति सृज्यमानमेव जगत्सर्वं लीयमानं स्यात् । अत एव हि शङ्कराचार्यैः सूत्रभाष्ये चतुर्थाध्याये चतुर्थपाठे समनस्कानां मुक्तानामीश्वरत्वे सत्यपि न जगद्व्यापार इत्यक्षाणि- 'जगद्व्यापारवर्ज'मिति सूत्रे इत्यादिन्यायः । एते ईश्वरत्रित्वे विरुद्धधेरन्निति भाव इतिचेत्प्रदर्श्यते तर्ह्यन्यः पन्थाः—सर्वज्ञत्वादिगुणगणविशिष्ट ईश्वर एक एव, स एव सङ्कल्पेन ब्रह्मादि-मूर्तित्रयं सृष्ट्वा स्वयं तत्र प्रविश्य सृष्ट्यादिकार्यं निर्वाहयतीति तेऽपी-श्वरा एवेति ।

ननु कथं ते ईश्वराः? किं त्वाधिकारिका एव- 'यावदधिकारं स्थित्वा पश्चाद्ब्रह्मभूयाय कल्पन्त' इत्युक्तत्वात् । किं चेश्वरस्तन्मूर्तित्रये जीवरूपेण विवेश, उत ईश्वररूपेण वा? यदि जीवरूपेण तर्ह्यनीश्वरा एव ते; यदीश्वररूपेण तर्हि 'तेने ब्रह्म हृदा य आदिकवय' इति वेदोपदेशानुपपत्तिर्ब्रह्मणस्सर्वज्ञत्वे ब्रह्मादीनां विष्ण्वादीनुद्दिश्य तपः-करणवैयर्थ्यं च । तस्मादसमञ्जसमीश्वरत्रयवचनमिदमिति चेत्तर्हि—व्यपदेशिवद्भावेन त्रिष्वीश्वरत्वमित्यभ्युपगम्यताम् ।

ननु भवतु, एकत्वेऽपीश्वरस्य सङ्कल्पाश्रयत्वेन किं मनोऽस्ति वा, न वा? नास्तित्वे मनोधर्मसङ्कल्पानुपपत्तिः, अस्तित्वे किं तदाश्रयं शरीरमस्ति, न वेति चेत्—यदृच्छया व्यक्तस्वीकृतदेहत्वेन तस्य शरीरमस्तु वा मा वा? उभयथाऽपि न दोष इति ।

ननु समाप्य प्रासङ्गिकं प्रकृतमनुसरावः, अन्तःकरणप्रतिबिम्ब-

हेतुर्निष्कृष्टः क इति चेदुच्यते—प्रारब्धक्षय इति; यद्वा यदा मनो ज्ञानेन प्रतिबध्यते तदैव जीवस्य न संसारः; किं तु यावद्देहपातं प्रारब्धानुभव आवश्यकः । सति तु प्रारब्धक्षये देहेन्द्रियमनांसि स्वस्वप्रकृतिषु लीयन्ते । तदानीमात्मनि या शक्तिरस्त्यन्तःकरणात्मिका, सा ब्रह्मणि मायेव तस्मिन्न किञ्चिदपि कुर्यात् । किं चायमात्मेद-मन्तःकरणमिति देहाद्युपाधिवशादेव हि भेदः ब्रह्मापेक्षया माया-पेक्षया च भवति । तदुपाधिप्रविलये स्वयमात्मा ब्रह्मैव, इयमन्तःकर-णात्मिका शक्तिर्मायैवेति । अन्तःकरणरूपप्रतिबन्धो नामान्तःकरण-स्यान्तःकरणव्यपदेशाभाव एवेतीष्यताम् ।

ननु सर्वज्ञत्वादिगुणकस्य समनस्कस्येश्वरस्य किं मुक्तिस्स्या-दुत न? मुक्तत्वे जगद्व्यापारो न स्यात्; अमुक्तत्वे ईश्वरस्य न मुक्तिः, ईश्वरांशस्य मुक्तिरिति महद्विचित्रमितिचेत्, मैवम्—न तत्र सूर्यो भातीत्यादिश्रुतिभिस्तस्य नित्यमुक्तत्वात्, जगद्व्यापाराभावस्तु इष्ट एव । ननु प्रत्यक्षविरोधः जगद्व्यापारस्य दृश्यमानत्वादितिचेत्, मैवम्—येन दृश्यते न तस्य मुक्तिः । अयं भावः—यावता स्वस्य समनस्कत्वं तावता स्वदृश्यमानजगत्स्रष्टृत्वान्यथानुपपत्त्या ईश्वरस्यापि समनस्कत्वं कल्पितं, स्वस्यैवामनस्कत्वे जगत एवाभावात्कथमीश्वरत्वादिकमिति । ननु मुक्तेभ्यश्शुकादिभ्यस्सकाशाद्यथाऽधुना पुराणादिजन्माभावः; एवं नित्यमुक्तादीश्वरादपि जगन्नोदीयादेवेतिचेत्तथैव पारमेश्वरं रूपद्वयं निर्विकारं सविकारं चेति । तत्र निर्विकाराज्जगद्व्यापाराभाव एव, सविकारात्तु जगद्व्यापार इति । इदमेव सूत्रकार आह- 'विकारावर्ति च तथाहि स्थितिमा'हेति ।

ननु यन्निर्विकारं तद्ब्रह्मैव, यत्पुनस्सविकारं स हीश्वरः, अमुमेवाश्रित्य हि प्रकृतविवादः त्वदुक्तरीत्या सविकारत्वादयममुक्त इति सिद्धं, तर्हि कथं जीवस्य मुक्तिरितिचेत्, मैवम्—जीवस्य जीवत्वमिव ईश्वरस्येश्वरत्वमपि जीवेनानुसन्धीयमानं मिथ्यैवेति । जीवस्स्वस्मिन्निव ब्रह्मण्यपि सविकारत्वं यावत्पश्यति तावज्जीवेश्वरजगद्व्यवहारः, यावन्न पश्यति तावन्न तद्व्यहार इति परमार्थतो नास्त्येव पारमेश्वरं रूपं विकारीति ईश्वरो मुक्त एवेति तदंशस्य जीवस्य मुक्तिर्घटत एवेति ।

ननु जीवस्यात्मनि सविकारत्वदर्शनं प्रति जीवेश्वरजगद्व्यवहारो हेतुः, तं प्रति तदित्यन्योन्याश्रय इतिचेत्, मैवम्—तत्प्रत्यविद्याया हेतुत्वादविद्यावशात्सविकारत्वदर्शनम् । तस्माद्व्यवहार इति भावः । ननु यस्य यावदविद्या तस्य तावद्व्यवहार इतीश्वरस्य मायात्मिकाविद्याविनाशे नैव व्यवहारः, यथा जीवस्येश्वरव्यवहारो जगत्सृष्ट्यादिकमेव । तस्मादीश्वरस्य मुक्तौ जगत्सत्य एव न भविष्यतीति जगतो मुक्तिहेतुशास्त्रादिकमनर्थकमेव । यदि पुनरीश्वरो न मुच्यत इत्युच्येत तर्हि तस्य मुक्त्यभावं प्रति हेतुर्वक्तव्यः । किं ज्ञानाभावः ? उत प्रारब्धक्षयनिरीक्षा ? नाद्यः- सर्वज्ञत्वश्रुतिव्याकोपात् । न द्वितीयः- ईश्वरस्य जीववत्पूर्वोत्तरदेहसम्बन्धाभावेन तद्देहकृतकर्मविशेषभूतप्रारब्धाभावादितिचेत्, उच्यते— मुक्तिर्हि बन्धपूर्विका, बन्धाभावे मुक्त्यभावात् । यथा पशूनां रज्ज्वादिभिर्बन्धश्चाध्यासहेतुकः, अन्यत्र अन्यधर्मारोपरूपः । सचाध्यासोऽविद्याजन्यः अविद्यानामाऽज्ञानं, इदं चाज्ञानं स्वकार्यद्वारा यथा जीवं बध्नाति तथा नेश्वरं- तस्य मायावत्त्वेन स्वतन्त्रत्वात्सर्वज्ञत्वाच्च ।

अनयैव मायया लीलापरपर्यायया ईश्वरो जगद्व्यापारं निर्वाहयति । अविद्याकार्यमध्यासो यथा जीवं बध्नाति मायाकार्यं जगत्तथा न बध्नात्येव तमपि, किंपुनरीश्वरमतो नित्यमुक्त एवेश्वर इति ।

ननु अतीवेदं विरुद्धं, विकारी मुक्त इति यत्समनस्कस्यामनस्कत्वमिति यच्चेतिचेत्, मैवम्— विकारिशब्देनात्र मन एवाभिधीयते; तेन सह साहित्यराहित्ये च तादात्म्याध्यासपूर्विके एव विवक्षिते । एतेन समनस्कत्वं नाम मनस्तादात्म्याध्याससाहित्यं, अमनस्कत्वं नाम मनसा सह तादात्म्याध्यासाभाव एवेत्यर्थः फलितः, अतो न विरोध इति, अत एव जीवस्यपि मुक्तव्यवहारो जीवन्मुक्त इति । नन्वेवं समनस्कत्वेऽप्यमनस्कत्वमात्मानुसन्धानदशायामात्मन्यपि दृष्टमेव, तदानीं मनसा तादात्म्याध्यासाभावात् । परं तु तथाविधस्यामनस्कस्य न जगद्व्यापारे प्रवृत्तिरौदासीन्यादितिचेत्, मैवम्—तथाविधस्यापि जगद्व्यापारप्रवृत्तौ हेतुर्मायास्तीत्युदासीनोऽपीश्वरो मायया जगद्व्यापारं करोतीति । ननु उदासीनः करोतीति विरुद्धमिदमितिचेत्, न—मायातोऽविरोधात् । केयं माया, विरोधेप्यविरोध इति । यदुक्तं च भागवते- 'सेयं भगवतो माया यन्न येन विरुध्यत' इति ।

ननु समनस्कत्वेऽप्यमनस्कत्ववन्तो जीवन्मुक्ता जनकादयः सन्त्येव; तेषु न सर्वज्ञत्वादिकमीश्वरधर्म इति ते जीवा एव । अथेश्वरः कः ? ('आत्मनो ब्रह्मणश्च गुणाभावाद्ब्रह्मादिस्तम्बपर्यन्तानां जीवत्वेन किञ्चिद्ज्ञत्वाच्च, ब्रह्मादिस्तम्बपर्यन्तदेहावस्थितस्समनस्को जीवो वाऽमनस्क आत्मा वा सर्वज्ञत्वादिगुणाभावेन नेश्वर इति कः पुनरीश्वर इति प्रश्नार्थः') इति चेदुच्यते—कामसङ्कल्पादीनां मनोधर्मत्वेन

सर्वकामत्वसत्यसङ्कल्पत्वादीनामपि मनोधर्मत्वात्सर्वज्ञत्वादिगुणकमीश्वर-मन एव; यथा किञ्चिज्ज्ञत्वादिगुणकं जीवमनः । न च चैतन्यस्य सर्व-ज्ञत्वादिगुणाभिधानात्सर्वज्ञत्वादिगुणकं चैतन्यमीश्वरः, किञ्चिद्ज्ञत्वादि-गुणकं चैतन्यं जीव इति मनो जडमेवेति कथं तस्य गुणवत्त्वमिति वाच्यं, सचैतन्यप्रतिबिम्बस्य मनसः कामादिगुणाश्रयत्वात् । अन्यथा कथं मनोधर्मस्सङ्कल्प इति व्यवहार उपपद्येत ? मनोधर्मत्वादेव गुणानां, ईश्वराभिधायकसगुणनिर्गुणश्रुत्यविरोधः; परमार्थतो निर्गुणं व्यवहारतः सगुणं ब्रह्मेत्यस्मन्मतराद्धान्तश्च । अत एवात्ममनोऽविवेकेन यथा जीवव्यवहारः, ब्रह्ममनोऽविवेकेन तथेश्वरव्यवहारः । अयं चेश्वर आत्मरूपत्वेन सर्वत्रास्ति, ब्रह्मरूपत्वेन सर्वमस्मिन्नस्ति । सर्वज्ञत्वादि-गुणकमनस्सम्बन्धेन तु स्वेच्छासङ्कल्पिते यत्र क्वापि देहे वर्तते; अणि-माद्यैश्वर्ययोगात् युगपदनेकेषु देहेषु च वर्तते । यथा श्रीकृष्णो युगप-द्वत्सबालदेहेषु इति । एतावता च भगवान्नारायणस्सर्वेश्वरो नित्यमुक्तः, तत्संकल्पादेव जीवानां मुक्तिरिति सिद्धम् ।

नच स्वस्वरूपावस्थितिलक्षणाया जीवन्मुक्तेः यथा ज्ञानं हेतुः तथा मुक्तेरपीति किमीश्वरसंकल्पेनेति वाच्यम्, जीवन्मुक्तिं प्रत्यज्ञानस्य हेतोरनैकान्तिकत्वात् । तथाहि- सत्यप्यात्मानात्मविवेकरूपे ज्ञाने गुरु-शास्त्रादिजन्ये दृश्यते ह्यधुनातनानां बहूनां वेदान्तिमतपूर्वको बहुलः संसारः । तेषु जीवन्मुक्तिवार्तापि न श्रूयते । असत्यपि तादृशज्ञाने निर्गुणोपासका जीवन्मुक्तास्सन्त्येव लोक इति ।

ननु निर्गुणोपासनं नाम ज्ञानमेव- निर्गुणस्य ब्रह्मत्वात्, तदुपासनस्य साक्षात्कारापरपर्यायज्ञानत्वान्निर्गुणोपासका ब्रह्मज्ञानिन

एवेति चेत्सत्यम्—तथापि 'मयोपास्यमानमिदं ब्रह्म, एवंविधमहमेव वेद' इति विवेकस्तु तेषां अस्त्येव । ये तु विवेकिनस्तेषां न तत्साक्षात्कार इति; सत्यपि विवेके साक्षात्काराभावात्मकस्य कार्यस्य कारणमीश्वरसङ्कल्पाभाव एवेति; नापि ततोऽन्यस्य कर्मणः कारणत्वं शङ्क्यम् । तथाहि- न तावत्प्रारब्धो हेतुर्ब्रह्मसाक्षात्कराभावं प्रति, सत्यपि साक्षात्कारे प्रारब्धक्षयाभावात् ; यदि प्रारब्धस्सक्षात्काराभावे हेतुस्तर्हि प्रारब्धवशात्प्राक्साक्षात्कारो नोदीयादेव, किं तु प्रारब्धो देहहेतुः- तत्क्षयेन देहक्षयात् । नापि सञ्चितं कर्म- विवेकेन तस्य नष्टत्वात् । अनष्टत्वे तु पुनः प्रतिबन्धिसत्त्वे विवेक एव नोदीयात् । नाप्यागामि कर्म- विवेकेन कर्मबीजस्य दग्धत्वव्यवहारात् । अदग्धत्वेपि तस्य भविष्यज्जन्मनि फलहेतुत्वात् । अत एव ह्यागामित्वं तस्य; नापि जीवादृष्टं- निरीश्वरस्य तस्य केवलस्य जडत्वेन फलदानावरोधनादिष्वशक्तत्वात् । अत एव हि कर्मफलमपि तदभिमानिदेवताभ्य एवेति सिद्धान्तितमाचार्यैः । तस्माज्जीवादृष्टापेक्षभगवत्सङ्कल्प एव मुक्तिं प्रति हेतुः । किं चान्यद्ब्रह्मसाक्षात्कारात्मकं ज्ञानं मुक्तिहेतुरिति वचनमप्ययुक्तं- साक्षात्कारस्यैव मुक्तित्वात् । साक्षात्कारावगत्यवबोधज्ञानानि प्राप्तिपर्यायपदानि हि; 'विवेकस्य मुक्तिः, तत्त्वं त्वनैकान्तिक'मिति पुरैव प्रदर्शितम् । न चैवं विवेकान्मुक्त्यभावे ब्रह्मसाक्षात्कारस्य मुक्तिरूपत्वे ज्ञानान्मुक्तिरिति श्रुतिविरोध आशङ्क्यः- मुक्तिपदस्य तत्र बन्धाभावपरत्वात् ; ब्रह्मसाक्षात्काराज्जीवस्य बन्धाभाव इत्यर्थः । यद्वा देहसद्भावे ब्रह्मसाक्षात्काराद्देहापायेपि ब्रह्मसाक्षात्कार इति न विरोधः । अतो त्वपुनरावर्तिनो ब्रह्मसाक्षात्कारस्य मुक्तित्वव्यवहारः, पुनरावर्ति-

नस्तु ज्ञानत्वव्यवहारः । अस्यापि लोके जीवन्मुक्तित्वव्यवहारोऽस्त्येव; समाधिव्युत्थितेषु दृश्यते हि ब्रह्मसाक्षात्कारात्पुनरावृत्तिः । एतावता मुक्तिं प्रति जीवन्मुक्तिर्हेतुः, तां प्रतीश्वरसङ्कल्प इति फलितम् ।

वस्तुतस्तु मुक्तिं प्रत्यव्यवधानेनैवेश्वरसङ्कल्पो हेतुरिष्यताम् । तथाहि- ईश्वरोपासनं द्विविधं- सगुणं निर्गुणं चेति, उपास्यस्येश्वरस्य रूपभेदात् यथा सगुणोपासकानामीश्वरस्सायुज्यं प्रदत्त इति भवताऽभ्युपेतं, तथा निर्गुणोपासकानामपीश्वर एव सायुज्यं दातुं क्षमते- रूपभेदेऽपीश्वरस्य वस्त्वेकत्वात् । तच्च सायुज्यदानं सङ्कल्पपूर्वकं भवितुमर्हति- दानत्वाल्लौकिकदानवदिति । नच सगुणेश्वरसायुज्यस्य सङ्कल्पपूर्वकत्वेऽपि निर्गुणसायुज्यस्य न तथात्वं- निर्गुणस्यामनस्कत्वादिति वाच्यं, एकस्यैवोभयात्मकत्वेनाऽदोषात् । एक एवेश्वरस्सर्वज्ञं स्वं तथात्वेन ये उपासते तेषां, निर्गुणं ब्रह्म स्वं तथात्वेन ये उपासते तेषां च यथानुगुणं सङ्कल्प्य फलं दत्त इति भावः ।

ननु निर्गुणब्रह्मसायुज्ये अमनस्कत्वादस्त्वानन्दः । सगुणब्रह्मसायुज्ये तु समनस्कत्वान्मनसः प्राग्जन्मस्मृतौ कदाचिद्दुःखमपि स्यादिति चेत् — मैवम् । महाराजास्थानं गतस्य तदैश्वर्याक्षिप्तचेतसः पुंसः क्षणं यथा स्वविस्मरणम्, यथा वा कार्यान्तरव्यग्रस्य पूर्वकार्यविस्मरणमेवं भगवद्दर्शनानन्दमनुभवतः पुंसश्चित्तं कदाचीदपि न ततोऽवतरति । निर्गुणानन्दादपि सगुणानन्दस्याऽधिक्यादेव मुक्ता अपि लीलया विग्रहं धृत्वा भगवन्तं भजन्त इति भागवते प्रोक्तम् । अनुभूयते ह्यधुनापि निरालम्बनध्यान इव सालम्बनध्यानेपि पुंसः सांसारिकसुखदुःखस्मरणाभावः । भगवानपि हि कदाचिदमनस्को योगरतः, कदाचित्समनस्कः

श्रीसत्यादिलीलारतः- अनन्दस्याविशेषात् । एतावता ग्रन्थसन्दर्भेण मुक्तिर्नामामनस्कत्वमिति लब्धम् । ईश्वरसायुज्यात्मकं समनस्कत्वमपि मुक्तिरेव । ब्रह्मण इव मुक्तेरपि सगुणत्वनिर्गुणत्वाभ्यां द्वैविध्यात् । मुक्तेरेव ब्रह्मत्वाच्च । सगुणब्रह्मोपासकः समनस्क ईश्वरो भवति । निर्गुणब्रह्मोपासकस्तु अमनस्कं ब्रह्म भवति । ईश्वरीभवनरूपमीश्वरसायुज्यं तु जीवे स्वधर्मत्यागपूर्वकेश्वरधर्माविर्भाव एव । नतु साक्षादैक्यम् । इदमेव समानधर्मयोगात्मकं सायुज्यं सारूप्यनाम्ना केचिद्वदन्ति- रूपशब्दस्य शरीरधर्मोभयार्थकत्वात् । केचित्तु रूपशब्दस्य शरीरार्थकत्वमेवाङ्गीकृत्य सारूप्यं सायुज्यादन्यदित्यामनन्ति । न चैवमनेकेषां भक्तानां भगवत्सायुज्येनेश्वरत्वे जगत्सृष्ट्यादिव्यापारसङ्कर इति वाच्यं, जगद्व्यापारवर्जमीश्वरत्वं तेष्विति प्रतिपादितत्वात् । ब्रह्मणा सह सायुज्यं तु साक्षादैक्यमेव- ब्रह्मात्मभेदहेतोरुपाधेर्मनसो लयात् । यथा घटनाशे घटाकाशमहाकाशयोस्साक्षादैक्यं, तथेति बोध्यम् । इमामेव मुक्तिं कैवल्यमिति वदन्ति ।

अथ यदुक्तं विशिष्टाद्वैतिभिः- 'मुक्तिर्नाम सायुज्यं, तच्चेश्वरसमानधर्मयोगात्मकमेव, नतु तेन साक्षादैक्य'मिति, तदद्वैतिभिरप्युररीकृतमेव—सगुणमुक्तेस्तथात्वात् । यत्तु पुनरद्वैतिभिर्निर्गुणमुक्तिर्ब्रह्मणा सह साक्षादैक्यात्मिका कैवल्याभिधा प्रतिपादिता, तां विशिष्टाद्वैतिनो नेच्छन्ति । 'तदधुना विचार्यते कैवल्यमस्ति वा न वा इति । न च विशिष्टाद्वैत्यनङ्गीकारात् नास्तीति वाच्यम् , कैवल्यस्वरूपाज्ञानस्यापि तदनङ्गीकारे हेतुत्वात् । यथा बौद्धैः सगुणमुक्तिस्वरूपाज्ञानिभिः

सगुणमुक्तिरप्यनङ्गीकृता तथेति । अतः कैवल्यानङ्गीकारे को तुहेरिति प्रश्नः ।

ननु अन्यस्य वस्तुनोऽन्यवस्त्वैक्यमनुपपन्नमिति यदुत्तरम्, तर्हि तदनुपपन्नम् । आत्मब्रह्मणोरनन्यत्वात् । यदि सविकारो जीवो निर्विकारं ब्रह्मेति जीवब्रह्मणोरन्यत्वमुच्येत, तर्हि तदन्यत्वं विकारगत मेव, न स्वरूपगतम् । विकारस्योपाधिभूतमनोधर्मत्वाभ्युपगमात् । यदि तु "प्रणवो धनुश्शरो ह्यात्मा लक्ष्यम् ब्र" ह्मेति श्रुत्या लोके शरश-रव्ययोरिव आत्मब्रह्मणोः परस्परसंश्लेष एव, न साक्षादैक्यम्- दृष्टन्त वैषम्यादिति उच्येत तर्हि तदप्यसदेव- प्राप्तिमात्रं प्रति शरशरव्य दृष्टन्तवचनात् । अन्यथा शरव्यस्येव ब्रह्मणोपि सावयवत्वमपीष्येत । येन सत्यामपि प्राप्तौ न साक्षादैक्यमिति वक्तुं शक्येत ।

अयं भावः—शरस्याग्रेण शरव्यमध्यं यथा संश्लिष्यति एवमात्मा स्वाग्रावयवेन ब्रह्ममध्यावयवे यदि लगेत, तर्हि दृष्टन्तसाम्यं स्यात् । नैवमुपपद्यते- आत्मब्रह्मणोरनवयवत्वात् । तस्माद्ब्रह्मप्राप्तिर्नामात्मनः ब्रह्मणा सह सक्षादैक्यमेवेति । यथा नद्यस्समुद्रेऽस्तंगच्छन्तीत्यादिश्रुतयो बह्वयः अत्र प्रमाणं हीति चेत्, नैवम्— अमनस्कमिति न तावत् किंचिद्वस्तु विद्यते । न चात्मा अमनस्क इति वाच्यम्, जीवमनसा तस्य समनस्कत्वात् । नापि ब्रह्म- ईश्वरमनसा तस्य समनस्कत्वात् । अमनस्कब्रह्माभावात् अमनस्का मुक्तिरपि नास्त्येवेति ।

ननु परमार्थतः ब्रह्मामनस्कमेव, व्यावहारिकं हि तस्य समनस्कत्व मिति चेत् - तर्हि मुक्तिरपि परमार्थतोऽमनस्का, व्यवहारतः समनस्केति वाच्यम्, तथात्वे ये वैकुण्ठे व्यवहारदशायां समनस्कमुक्तिभाजस्सेश्वरा

आत्मानः, ते परमार्थतोऽमनस्का एवेति मुक्तिभाजामेव कैवल्यभावत्वात् नान्योन्यं वैलक्षण्यमिति । मुक्तिरेकाकारैव । व्यवहारपरमार्थाभ्यां तु समनस्कत्वामनस्कत्वभेदः । यथात्मनो ब्रह्मणश्च । तेन सगुणोपासकैर्या लभ्यते सैव निर्गुणोपासकैरपीति हेतोरमनस्कत्वं नाम न मनसः स्वरूपलयः, किन्तु तादात्म्याभाव एवेति सिद्धम् ।

ननु परमार्थदशायां यथा ब्रह्मणोऽमनस्कत्वं, व्यवहारदशायां समनस्कत्वं च, तथा मुक्तेरपीति वक्तुं न शक्यते । मुक्तेरेव परमार्थदशारूपत्वादिति चेन्नैवम्, अवस्थापरपर्यायाया दशाया अनित्यत्वेन मुक्तेरप्यनित्यत्वापत्तेः । नन्ववस्थनामाऽवस्थानम्, तथा च मुक्तिदशानाम जीवस्य ब्रह्मात्मनावस्थानमिति न मुक्तिदशाया अनित्यत्वापत्तिरितिचेत्—नैवमपि, मुक्तेरेव ब्रह्मस्वरूपावस्थानात्मकत्वेन दशापदस्यावस्थनार्थकत्वे पौनरुक्त्यात् । ननु अवस्थात्वेपि निर्विकारत्वेन मुक्तिदशाया नानित्यत्वमितिचेत् — नैवम्, सुषुप्तेर्निर्विकारत्वेऽप्यनित्यत्वात् । किंच यस्यां दशायामुक्तिः सा दशा किं मनसोऽवस्था ? उत (जीवस्य) आत्मनः ? नात्मनः- अवस्थासाक्षित्वेन तस्याऽवस्थायोगात् । नम नसः मुक्तौ तस्य स्वरूपलयाभ्युपगमात् । जीवस्येति तु नाशङ्क्यं, जीवत्वमुक्तत्वयोर्विरुद्धत्वात् । जाग्रत्स्वप्नादयस्तु मनोवस्था एव । ननु बाल्याद्यवस्थेव मरणावस्थाऽपि यथा देहस्य, तथैव लयावस्थापि मनस एवेति मनोलयात्मिका मुक्त्यवस्था मनोऽवस्थैव, सुषुप्तिवच्चेयमनित्या, सुषुप्त्यनित्यत्वं प्रति संस्कारात्मना मनस्सद्भावस्य हेतुत्वादितिचेत्, भवतु, क पुनर्ब्रह्मस्वरूपेणात्मनोऽवस्थानम् ? उच्यते, सर्वत्रेति । मुक्तेः प्रागपि किं न तथा ? तथैव । अथ को भेदो बन्धमुक्त्योः ? अध्यासतद्भावरूपः ।

ननु मुक्तौ सर्वस्यैवाभावात्सर्वत्रावतिष्ठत इति कथमुक्तिः? सर्वमिव सर्वत्रावस्थानमपि व्यावहारिकं हि । ननु सर्वत्रावस्थानमिव ब्रह्मस्वरूपेणावस्थानमपि किं न व्यावहारिकमिति चेत् — मैवम्, आत्मनो ब्रह्मस्वरूपावस्थितिं प्रति व्यवहारस्याप्रयोजकत्वात् । ननु गुरुशास्त्रादिव्यवहारः प्रयोजको हि — मैवम् । आत्मब्रह्मैक्यज्ञानं प्रति तस्य हेतुत्वेपि ब्रह्मभूयं प्रत्यहेतुत्वात् । अन्यथा ब्रह्मस्वरूपावस्थितावपि गुरुशास्त्रादिव्यवहारः प्रसज्येत । नैवं दृश्यते समाधिसुषुप्त्योः ।

आस्तां तावदिदं, अपि च कैवल्यसत्त्वे सुषुप्तिरेव निदर्शनम् । नच सुषुप्ताविव मुक्तावपि ब्रह्मानन्दानुभवज्ञानं विनश्येदिति वाच्यम्, आवरकज्ञानाभावेन सुषुप्तितो मुक्तेर्वैलक्षण्यात् । नचैवं सुषुप्तिनिदर्शनोक्तिः व्याहन्येतेति वाच्यम्, दृष्टान्तदार्ष्टान्तिकयोः सर्वात्मना ऐक्ये अयं दृष्टान्तः, इदं दार्ष्टान्तिकमिति भेदव्यवहारानुपपत्तेः । परन्तु यत्किंचिद्धर्मपुरस्कारकमेव तयोः सामान्यम् । व्यवहाराभाव एवानयोः समानधर्म इति वेद्यम् । ननु जीवद्दशायामात्मनो यथा ब्रह्मप्राप्तिं प्रति मनो द्वारभूतं तथैव मुक्तावपीति मुक्तेः कैवल्यस्य समनस्कत्वं सिद्धमितिचेत् — मैवम्, जीवद्दशायामपि मनउपरमस्यैव द्वारभूतत्वात, न तु मनसः । न चैवममनस्का जीवाः समनस्कादीश्वरादपि कैवल्यभाकत्वेनोत्तमा इति हेतोः जीवानामीश्वरसाम्याय समनस्कत्वमेव स्यात्, नत्वमनस्कत्वमिति नास्त्येव कैवल्यमिति वाच्यम्; ईश्वरस्य वस्तुतो ब्रह्मत्वेनामनस्कत्वात् । समनस्कत्वं तु मायिकमेव । मायिकेनाप्यनेन न पुनरीश्वरस्य बन्धः- अविद्याभावादिति प्रागेव प्रतिपादितम् ।

नन्वेवं जीवस्यापि मुक्तौ ईश्वरतुल्यत्वेनाविद्यकसमनस्कत्वाभावेपि मायिकं समनस्कत्वं किमिति न स्यादिति चेत् — सगुणमुक्तावस्थैव तथात्वमिति मयोक्तमेव । ननु सगुणस्यापीश्वरस्य यथा परमार्थतो नैर्गुण्यम्, तथा सगुणानामपि मुक्तानां परमार्थतो नैर्गुण्यमिति सगुणमुक्तिरेव परमार्थतो निर्गुणमुक्तिरिति चेत्— भवतु, त्वदुक्तरीत्यापि पारमार्थिकी निर्गुणमुक्तिरेव । सगुणमुक्तिस्त्वपारमार्थिक्येव । अतः परमार्थः कैवल्यं ब्रह्म, न तत्र जीवेश्वरव्यवहार इत्यद्वितीयं ब्रह्मेत्यद्वैतसिद्धिः ।

श्लो॥ मुक्तिरीश्वरसायुज्यं ब्रह्मसायुज्यमेव वा ।
ईश्वरब्रह्मणोरैक्यान्मुक्त्योरैक्यं शमस्तु नः ॥

नः शं सुखमानन्दो मुक्तिरस्त्विति ग्रन्थान्ते मङ्गलाशीः ॥

श्री हयग्रीवार्पणमस्तु ।

इति श्री बेल्लंकोण्डोपनामक रामरायकविकृतिषु
" वेदान्ततत्त्वामृतम् " समाप्तम् ।





श्रीहयग्रीवाय नमः ।

# वेदान्तनिश्चयः ।

श्लो॥ दृग्ब्रह्म दृश्यं माया चेत्यस्ति वस्तुद्वयं तयोः ।
दृश्यं सर्वात्मना जातमनुस्यूतं दृशाऽखिलम् ॥१॥
तद्ब्रह्म द्विविधं भूयः पूर्णावच्छिन्नभेदतः ।
आकाशवत्तत्र पूर्णं परोऽन्यत्प्रत्यगुच्यते ॥२॥

यथाऽऽकाशः पूर्ण इति, अवच्छिन्न इति द्वेधोच्यते महाकाशघटाकाशनामभ्यां तद्वदित्यर्थः । पर ईश्वरः परमात्मा ।

अवच्छेदकमेतस्य त्वन्तःकरणमुच्यते ।
ममकाराहंकृतिभ्यां मायया विकृतं च तत् ॥३॥

एतस्य प्रत्यगात्मनः ; तदन्तःकरणम् ।

अहङ्कारस्तत्र कर्ता भोक्ता जीवस्स्मृतो बुधैः ।
ममकारो मनो बुद्धिश्चित्तं चेत्युच्यते बुधैः ॥४॥
तदेतदन्तःकरणं वस्तुतो जडमप्यथ ।
चिद्धर्माध्यासतस्स्वस्मिन्मायिकाच्चेतनं स्मृतम् ॥५॥

मायिकात् मायया कृताध्यासात् ।

शृणोति पश्यत्यत्तीदं जिघ्रति व्याकरोति च ।

तत्तदिन्द्रियसाहाय्यात्सुखदुःखे प्रयाति च ॥६॥
देहतादात्म्यतश्चैतज्जायते म्रियतेऽपि च ।
भोगाय कर्म कुरुते भुंक्ते कर्तुं कृतिं तथा ॥७॥
अस्येयं संसृतिः प्रत्यगात्मन्यारोपिताऽबुधैः ।
नीलतेव घटस्याभ्रे निर्विकारस्स वा स्वयम् ॥८॥
अस्यान्तकरणस्य ; अभ्रं खं ; स प्रत्यगात्मा ।

द्वासुपर्णा इति ब्रूते श्रुतिश्चोक्तार्थमेव सा ।
साक्षिणं प्रत्यगात्मानं भोक्तारं जीवमेव च ॥९॥
प्रत्यग्जीवाविवेकेन प्रतीच्यापाततस्स्फुरन् ।
संसारो विनिवर्तेत विवेकेन तयोः पुनः ॥१०॥
प्रतीचो लक्षणं दृक्त्वं दृश्यत्वं जीवलक्षणं ।
इमं विभागं विज्ञाय दृश्यं दृश्याद्विवेचयेत् ॥११॥
अहङ्कारो ज्ञायते वा ममायमिति साक्षिणा ।
अहङ्कारस्य जन्मान्तौ जाग्रत्सुप्त्योश्च निश्चयात् ॥१२॥
ज्ञायते साक्षिणेत्युत्तरवाक्येप्यन्वयः ।

नात्मा संवेद्यतेऽन्येन स्वयमेव स्फुरत्यतः ।
स्वयंप्रकाश इति च प्रोच्यते वेदमूर्धभिः ॥१३॥
सर्वावभासकस्सोयं सर्वसाक्षी परः पुमान् ।
अजो नित्यश्शाश्वतश्च प्रत्यगात्मा स्वयम्प्रभुः ॥१४॥
जायते म्रियते जीवस्संसारी दृश्यतेपि च ।
एवं विवेचिते स्वस्मिन् संसारो न मनागपि ॥१५॥
स्वस्मिन्नात्मनि प्रतीचि ।

तद्विविक्तं च निर्द्वैत स्वरूपं प्रत्यगात्मनः ।
चिदानन्दमयं सत्यं भूमरूपं सुमङ्गलम् ॥१६॥

साक्षात्समाधौ यः पश्यत्ययस्मीति पूरुषः ।
तस्य द्वैतमिदं सर्वं मृषैव प्रतिभासते ॥१७॥

आत्मा सत्यो मृषा सर्वमिति यस्य विनिश्चयः ।
परिच्छिन्नं कथं विद्यात्प्रत्यगात्मानमेष सः ॥१८॥

विनष्टायां च मायायां सकार्यायां धियाऽनया ।
शिष्यते प्रत्यगात्मैव केवलब्रह्मरूपतः ॥१९॥

तत्त्वमस्यादिवेदान्तमहावाक्यान्यपि स्वयम् ।
इदमेवाद्वैततत्त्वं लक्षयन्ति विलक्षणम् ॥२०॥

पूर्णं ब्रह्म तदर्थस्स्यादवच्छिन्नस्त्वमर्थकः ।
अस्यर्थैक्याऽसम्भवेन द्वयोर्लक्ष्यार्थ आश्रितः ॥२१॥

अवच्छिन्नत्वपूर्णत्वविरुद्धार्थप्रहाणतः ।
चैतन्यमेव लक्ष्यार्थस्तच्चाद्वैतमखण्डकम् ॥२२॥

सर्वस्य मायामयत्वात्पूर्णत्व परमात्मनः ।
प्रतीचोऽवच्छिन्नता च मिथ्या स्यान्न कथं पुनः॥२३॥
पूर्णत्वं सर्वव्यापित्वम् ।

सर्वस्य मायामयत्वं प्राक्चोर्ध्वं तदभावतः ।
ज्ञानादूर्ध्वं न माया चेत्यस्माद्दृश्यं मृषा मृषा ॥२४॥

दृक्पदार्थस्त्वेक एव सत्यस्सच्चित्सुखात्मकः ।
दृशोऽभावं न दृग्वेत्ति नान्यस्सद्रूपता ततः ॥२५॥

दृश्यस्य भावाभावौ चाप्ययं वेत्तीति चिन्मयः ।
प्रियं समस्तमात्मार्थमित्यात्मा सुखरूपकः ॥२६॥
असज्जडं दुःखरूपं दृश्यं तस्माद्विलक्षणे ।
दृग्दृश्ये द्वे तयोरैक्यं न कदाचिच्च सम्भवेत् ॥२७॥
गगने नैल्यवत्स्वात्मन्यसज्जीवेन्द्रियादिकम् ।
मायया दृश्यमध्यस्तं तस्मान्मायां विनाशयेत् ॥२८॥
अभ्रयाथात्म्यविज्ञानाद्यथा नैल्यं सकारणम् ।
नश्येदेवं स्वयाथात्म्यज्ञानाज्जीवादिकं सम ॥२९॥
सकारणमिति पदस्य जीवादिकमित्यनेनाप्यन्वयः ।
आत्मयाथात्म्यविज्ञानकृते तस्मान्निरन्तरम् ।
श्रवणादिकमादध्यादिति ब्रूते श्रुतिर्हिता ॥३०॥
निष्प्रपञ्चब्रह्मरूपं याथात्म्यं प्रत्यगात्मनः ।
तद्ज्ञात्वा मुच्यते जन्तुः संसारान्मयिकात्स्वयम् ॥३१॥
रज्जुज्ञानाद्यथा सर्पभ्रान्त्या मुच्येत लौकिकः ।
आत्मज्ञानात्तथा जीवभ्रान्त्या मुच्येत पण्डितः ॥३२॥
अहङ्कारचिदात्मानावेकीकृत्याविवेकतः ।
यस्तु व्यवहरत्यस्मीत्ययमेवं विवेचयेत् ॥३३॥
ननु कस्यात्मनि जीवभ्रान्तिः; किं जीवस्य? उत प्रत्यगात्मनः? नाद्यः- जीवस्य जीवज्ञानस्य प्रमात्वात्। नान्त्यः- तस्य भ्रान्त्ययोगादत आह- अहमिति अस्मीत्यहमर्थेऽध्ययमेवं पूर्वोक्तविधया दृग्दृश्यौ विवेचयेत् ।
अहङ्काराध्यासवशाद्यस्संसारात्मतां गतः ।
स एवात्मविवेकेन सच्चिद्ब्रह्मात्मतां व्रजेत् ॥३४॥

नापि जीवस्य स्वनाशरूपापुरुषार्थदोषप्रसक्तिरित्याह — अह-ङ्कारेति ।

संसर्तुं वा विमोक्तुं वा केवलाऽहंकृतिर्न हि ।
क्षमा तस्मात्सचित्काहङ्कारः पूरुष आश्रितः ॥३५॥

आत्मानं चेदिति श्रुत्यैवाश्रित इति भावः ।

आत्मानात्माध्यासशाली मुमुक्षुः पूरुषस्ततः ।
आत्मानात्मविवेकं तु कुर्यान्मुक्तिप्रसिद्धये ॥३६॥

पुरुषस्याध्यासहानाद्ब्रह्मरूपेण संस्थितिः ।
मुक्तिरित्युच्यते सेयं नित्या किन्तु तिरोहिता ॥३७॥

मायया तत्तिरोधाननाशार्थं प्रविवेचयेत् ।
दृश्यात्पुमान्निजात्मानमिति वेदान्तनिश्चयः ॥३८॥

इति श्री बेल्लंकोण्डोपनामक रामरायकविकृतिषु
वेदान्तनिश्चयस्समाप्तः ।
साधारण भाद्रपद शुद्ध सप्तमी ।

